THE

# ÁS'ASTILAKA

OF

# OMADEVA SÛRI

WITH THE COMMENTARY OF S'RUTADEVA SÛRI

PART II.

EDITED BY

MAHÂMAHOPADHYÂYA PANDIT S'IVADATTA,

Head Pandit and Superintendent, Sanskrit Department,

Oriental College, Lahore,

AND

KÂS'ÎNATH PÂNDURANG PARAB.

PRINTED AND PUBLISHED

BY

TUKARAM JAVAJÎ,

PROPRIETOR OF JÂVAJI DÂDÂJI'S NIRNAYA-SÂGARA PRESS.

BOMBAY

1903

Price 2½ Rupees

काव्यमाला ७०.



श्रीसोमदेवसूरिविरचितं

# यशस्तिलकम् ।

श्रीश्रुतसागरसूरिकृतया व्याख्यया समेतम् ।



उत्तरखण्डम् ।



जयपुरमहाराजाश्रितमहामहोपाध्यायपण्डितदुर्गाप्रसादात्मज-
केदारनाथ[illegible]शर्मणा महामहोपाध्याय-
पण्डितशिवदत्तशर्मणा, मुम्बापुरवासिपरबोपाह्व-
पाण्डुरङ्गात्मजकाशीनाथशर्मणा च
संशोधितम् ।



तच

मुम्बय्यां निर्णयसागराख्ययन्त्रालये तदधिपतिना मुद्राक्षरैरङ्कयित्वा
प्राकाश्यं नीतम् ।



१९०२



([illegible])



मूल्यं २॥। रूप्यकाः ।

तद्ध्यानत्विषि जातकल्मषमुषि प्रादुर्भवज्ज्योतिषि
त्रैलोक्यक्षुभि दत्तयात्रककुभि स्वर्गिस्मृतानुष्टुभि ।
यस्मिन्नच्युति सर्वलोकमहति स्तोत्रोन्मुखश्रीकृति
श्रेयोभाजनतां जनः परमगात्स स्ताच्छ्रिये वो जिनः ॥ २ ॥

अहो स्वकीयप्रतापोद्रेकमुद्रितसमस्तसमुद्र कुवलयानन्दनचन्द्र, अन्यदा

---

न च केवलज्ञानादिलक्ष्मीप्राप्ते सति भुवनत्रयस्य पतयः इन्द्रधरणेन्द्रादयः पुरोऽग्रतः छत्रत्रयं बिभ्रतः आतपत्रत्रयं धारयन्तो जायन्ते । कीदृशा जायन्ते । प्रतिचारका इव । रूपकोपमालंकारः ॥

तद्ध्यानत्विषीत्यादि । स जिनो वो युष्माकं श्रिये अभ्युदयनिःश्रेयसलक्ष्म्यर्थं स्तात् भवतु । स कः । यस्मिञ्जिने जनो लोकः परं निश्चयेन श्रेयोभाजनतां कल्याणपरम्पराभव्यत्वमगात्प्राप्तः । कथंभूते यस्मिन् । तद्ध्यानत्विषि सा सर्वकर्मनिर्मूलिनी ध्यानत्विड् ज्योतिः श्रुतं वृत्तं वा यस्य स तथा तस्मिन् । इत्यनेन पदेन पृथक्त्ववितर्कविचारं एकत्ववितर्कविचारं च शुक्लध्यानद्वयमुक्तं भवति । पुनः कथंभूते । जातकल्मषमुषि कल्मषं मुष्णातीति कल्मषमुट्, जात उत्पन्नश्चासौ कल्मषमुट् जातकल्मषमुट् तस्मिन् । इत्यनेन पदेन ध्यानबलेन कृत्वा घातिकर्मत्रिषष्टिप्रकृतिक्षयमुक्तो भगवत इति ज्ञातव्यम् । पुनः कथंभूते । प्रादुर्भवज्ज्योतिषि प्रादुर्भवत् उत्पद्यमानं ज्योतिः केवलज्ञानलक्षणं तेजो यस्य स तथा तस्मिन् । इत्यनेन पदेन घातिसंघातघातने सति केवलज्ञानमुत्पन्नं भगवत इति सूचितं भवति । पुनः कथंभूते । त्रैलोक्यक्षुभि क्षोभणं (क्षुप्) इन्द्रादीनामासनकम्पनम्, त्रैलोक्यस्य क्षुप् चलनं यस्मात् स तस्मिन् । इत्यनेन पदेन स्वर्गलोके घण्टानादः, ज्योतिर्लोके सिंहनादः, व्यन्तर्लोके पटहध्वनिः, भवनवासिलोके शङ्खध्वनिरभूत् इति सूचितं भवति । पुनः कथंभूते । दत्तयात्रककुभि दत्ता कृता यात्रा भगवत्केवलज्ञानपूजार्थं गमनं ककुप्सु दिक्षु यस्य स तस्मिन् । इत्यनेन पदेन देवागमः सूचितो भवति । पुनः कथंभूते । स्वर्गिस्मृतानुष्टुभि स्वर्गिभिरिन्द्रादिभिर्देवैः स्मृताः चित्तीकृताः अनुष्टुबादिछन्दोभिः स्तुतयो गद्यपद्यादयो यस्य स तस्मिन् । इत्यनेन पदेन समवसरणस्थितो भगवान् कथितः । पुनः कथंभूते । अच्युति न च्यवते न चलति अच्युत्तस्मिन्नच्युति । इत्यनेन पदेन विहारानन्तरं योगनिरोधः सूचितः । पुनः कथंभूते । सर्वलोकमहति सर्वेषां लोकानां सर्वेषु लोकेषु वा महान् परमगुरुः सर्वलोकमहान् तस्मिन् । इत्यनेन पदेन भगवान् सिद्धो बभूवेति सूचितम् । पुनः कथंभूते । स्तोत्रोन्मुखश्रीकृति स्तोत्रेषु उन्मुखा बद्धोत्कण्ठास्तेषां श्रियं सर्वोत्कलक्षणां करोतीति स तस्मिन् । इत्यनेन पदेन भगवतः परिनिर्वृत्तकल्याणनिर्वाणादिभिः कृतं भवतीति सूचितम् । अतिशयालंकारः ॥

अहो स्वकीयप्रतापोद्रेकमुद्रितसमस्तसमुद्र स्वकीयेन प्रतापोद्रेकेणाधिकेन मुद्रिता

मार्गनिर्गमद्युति खरकरानुव्रजनपराम्बरचरचमूरचितारुणमणिविमानप्रभापटलतुलने त्रिपुरदाहोर्जितधूर्जटिनिटिललोचनानलज्वलद्दानवनगरनीतिनिकटे सुरासुरसमरमेदिनीद्रवद्रुधिरपूरप्रकाशिनि दिनकृत्करकृपाणपातितदैत्यचिताचक्रवालानुकूले मातृमण्डलक्रीडाकीलालकुण्डकान्तिनिकेतिनि रविरथतुरगवेगखरखुरोदस्तास्तमस्तकमनःशिलाधूलिलीले चण्डीशताण्डवाडम्बरावसरसुरप्रसारितसुवर्णमण्डपश्रिणि तमस्तमालारामप्रथमतराविर्भूत-

---

पिण्डालक्तकरसेन पिण्डप्रायलाक्षारसेन प्रभाविर्तौ मण्डितौ चरणौ तयो. मार्गनिर्गम पदवीनिर्गमस्तद्वत् द्युर्दीप्तिर्यस्य तत्तथोक्त तस्मिन् । पुन. कथभूते । खरकरानुव्रजनपराम्बरचरचमूरचितारुणमणिविमानप्रभापटलतुलने खरकर. श्रीसूर्यस्तस्यानुव्रजनपरा पृष्ठतो गमनतत्परा या अम्बरचरचमू देवसेना तया रचितानि निर्मितानि अरुणमणिविमानानि पद्मरागव्योमयानानि तेषा प्रभा तस्या यत्पटलं समूहस्तस्य तुलना उपमा यस्य संध्यारागमहसस्तत्तथोक्तं तस्मिन् । पुन. कथभूते । त्रिपुरदाहोर्जितधूर्जटिनिटिललोचनानलज्वलद्दानवनगरनीतिनिकटे त्रिपुरो नाम दैत्यविशेषस्तस्य दाहो भस्मीकरण तस्मिन् ऊर्जितो बलवत्तरोऽप्रतिहतव्यापारो योऽसौ धूर्जटि' श्रीमहादेवस्तस्य निटिलं ललाटपट्टस्तत्र यत् लोचन तृतीय नयन तस्यानलेन ज्वलन्ति यानि दानवनगराणि त्रिपुरपुराणि तेषां नीतिरुपमा सा निकटे यस्य तत्तथोक्त तस्मिन् । पुनः कथंभूते । सुरासुरसमरमेदिनीद्रवद्रुधिरपूरप्रकाशिनि सुराश्च असुराश्च सुरासुरास्तेषा समरमेदिनी तत्र द्रवन्ति प्रवहन्ति यानि रुधिराणि तेषां पूरस्तद्वत् प्रकाशते इत्येवशील तत्तथोक्त तस्मिन् । पुन. कथभूते । दिनकृत्करकृपाणपातितदैत्यचिताचक्रवालानुकूले दिनकृत् तस्य करौ हस्तस्तत्र योऽसौ कृपाणस्तेन पातिता मारिता ये दैत्यास्तेषा चिताचक्रवाल मृतकाग्निमण्डल तस्य अनुकूल सदृशं यत् तत्तथोक्त तस्मिन् । पुन कथभूते । मातृमण्डलक्रीडाकीलालकुण्डकान्तिनिकेतिनि मातॄणा मण्डल तस्य क्रीडाकीलालकुण्ड तस्य कान्तिस्तस्या निकेतो गृह उपमा विद्यते यस्य तत्तथोक्त तस्मिन् । उक्त च—'ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा । वाराही चैव चेन्द्राणी चामुण्डा सप्त मातर' ॥' पुनः कथभूते । रविरथतुरगवेगखरखुरोदस्तास्तमस्तकमन.शिलाधूलिलीले रविरथस्य ये तुरगास्तेषा वेगेनोपलक्षिता खरास्तीव्रतरा ये खुराः पादाग्राणि तैरुदस्ता उत्क्षिप्ता अस्तमस्तकस्य अस्ताचलशिखरस्य या मन शिलाधूलिस्तस्या लीला यस्य तत्तथोक्त तस्मिन् । पुन कथभूते । चण्डीशताण्डवाडम्बरावसरसुरप्रसारितसुवर्णमण्डपश्रिणि चण्डीशस्य ताण्डवस्तस्याडम्बरस्तस्यावसरे सुरै प्रसारितो योऽसौ सुवर्णमण्डपस्तस्य श्री शोभा यस्य तत्तथोक्त तस्मिन् । पुन कथभूते । तमस्तमालारामप्रथमतराविर्भूतकिशलयस्तम्बाडम्बरे तमोऽन्धकारस्तदेव तमालारामस्तमालवन तस्मात्प्रथमतरं पूर्वमेव आविर्भूतो योऽसौ किशलयस्तम्बः पल्लवसमूहस्तद्वत् आट-

दरदकन्दरपरागसंगमादिव दाडिमीकुसुमकुड्मलपरिमलनादिव द्युनदीतीरतपोधनोन्मुक्तरक्तचन्दनवन्दनादिव कनककेतकीरजोरञ्जनादिव वृक्षोत्पलमञ्जरीमकरन्दस्यन्दादिव च नितान्तं लोहितायति निजारुणिमरञ्जितवरुणपुरपुरंध्रिकाधरदले सति संध्यारागमहसि,

तरसरसिकराक्षसक्षोभसमीक्षयारुणतोद्रेकदुर्दिनहृदयरक्षावेक्षणादिव अधोक्षजविपक्षोत्क्षीबदानवावस्कन्धभीतेर्दितिसुतशत्रुकलत्रपरित्राणचरित्रेणेव

---

रागापहारादिव दरदकन्दरपरागसंगमादिव दाडिमीकुसुमकुड्मलपरिमलनादिव द्युनदीतीरतपोधनोन्मुक्तरक्तचन्दनवन्दनादिव कनककेतकीरजोरञ्जनादिव वृक्षोत्पलमञ्जरीमकरन्दस्यन्दादिव च नितान्तं लोहितायति निजारुणिमरञ्जितवरुणपुरपुरंध्रिकाधरदले नितान्तमतिशयेन लोहितायति रक्तत्वसंगतया उपलक्षितो योऽसौ निजः स्वकीयः अरुणिमा आरुण्यरागस्तेन रञ्जितानि विद्रुमवर्णानि कृतानि वरुणपुरपुरंध्रीणां पश्चिमदिग्वासिनगरस्त्रीणां अधरदलानि येन संध्यारागमहसा तत्तथोक्तं तस्मिन्। नितान्तं लोहितायति कस्मात्। उत्प्रेक्ष्यते—मिथुनचरणतत्पराणां चक्रवाकीचक्रवाकपक्षिणां रात्रिनिरहनया नद्वियोगेन रागापहारादिव तद्रागमोचनादिव। पुनश्च कस्मात्। ....... .... ........... . .

... .. .... ... .. . । पुनश्च कस्मात्। दाडिमीनां रक्तवर्णानां कुसुमकुड्मलानि मुकुलानि तेषां परिमलनादिव निमर्दनादिव। पुनश्च कस्मात्। द्युनदीतीरयोर्गङ्गातटयोर्ये तपोधनाः श्राम्यमुनयः तैरुन्मुक्तानि ऊर्ध्वं क्षिप्तानि सूर्यपूजनार्थं यानि रक्तचन्दनानि कुचन्दनानि तेषां वन्दनादिव संगमादिव। पुनश्च कस्मात्। कनककेतक्यस्तासां रजांसि परागास्तेषां रञ्जनादिव रागसंयोगादिव। पुनश्च कस्मात्। वृक्षोत्पलः कर्णिकारवृक्षास्तेषां पुष्पाण्यपि वृक्षोत्पलानि तेषां मञ्जरीणां वल्लरीणां योऽसौ मकरन्दस्तस्य स्यन्दादिव स्रवणादिव। उत्प्रेक्षालंकारः॥

पुनश्च कस्मिन् सति महादेवीभवनद्वारमुपागतोऽसि। स्थलनलिनीखण्डे . .... . .. ..... .... ........... .. .. . . . . .. । वर्षभूते। संकोचोदगत्पुटप्रकाण्डे संकोचेन संवरणेन उदयन्ति उद्गच्छन्ति पुटप्रकाण्डानि पत्रसमूहा यस्य स तथोक्तस्तस्मिन्। कमलपुष्पपत्राणां संकोचोऽपि कस्मात्, इत्याह—तरसरसिकराक्षसक्षोभसमीक्षया तरसे अपक्रमाले रसिका आकाङ्क्षका ये राक्षसास्तेषां क्षोभ उत्कलनं तस्य समीक्षया अवलोकनेन अरुणतोद्रेकदुर्दिनहृदयरक्षावेक्षणादिव अरुणताया रक्तत्वस्य योऽसावुद्रेक आधिक्यं तेन दुर्दिनानि नहितानि मयूकामिच्छन्ति यानि हृदयानि तेषां रक्षावेक्षणं रक्षणकाङ्क्षणं तस्मादिव। अत्रायं भावः—कमलैश्चिन्तितं अस्माकं हृदयानि रक्तानि वर्तन्ते, तानि च मांसमिति मत्वा राक्षसा मा भक्षयन्त्विति शङ्कया हृदयसंवरणं कमलैः कृतमिति भावः। पुनश्च केन संयुक्ता संकुचिता इत्याह—अधोक्षजविपक्षोत्क्षीबदा-

पूर्वदिगन्तादितस्ततो धावन्तीषु कृष्णलामुखमलिनरुचिषु तमःपयोधिवीचिषु,

सर्वं विष्णुमयं जगदिति सत्यतां नयतीव प्रतिक्षणं कृष्णतां पुष्णति विष्वद्रीचि भुवनेषु संजाते च प्रदोषसमये,

तदनु कामिनीप्रसाधनेष्विव यथास्थानमुपसरत्सु वनमृगेषु, प्रवसितेष्विव वासराश्रयोन्मुखेषु चिक्किरनिकरेषु, वारवनितास्विव स्ववासाङ्गणभागिनीषु शार्दूलसमितिषु, कितवकटित्रेष्विव विमुच्यमानेषु संध्योपासनाञ्जलिमुकु-

---

चरणप्रान्तेषु पर्यस्तविद्रुमवनास्विव पर्यस्तानि क्षिप्तानि विद्रुमवनानि याभिः प्रवालवनानि यास्तास्तास्विव। कथंभूतेषु पादपल्लवेषु। यावकपुनरुक्तकान्तिप्रभावेषु यावकेन लाक्षारसेन पुनरुक्तो द्विगुणीकृतः कान्तिप्रभावो येषां ते तथा तेषु। किं कुर्वतीषु तमःपयोधिवीचिषु। पूर्वदिगन्तात् ऐन्द्रादिदिक्पर्यन्तात् इतस्ततो यत्र तत्र धावन्तीषु वेगवद् गमनं कुर्वतीषु। पुनः किं कुर्वतीषु। कृष्णलामुखमलिनरुचिषु रक्तिकावक्त्रकज्जलकान्तिषु। उपमालंकारः॥

पुनश्च कस्मिन् सति महादेवीभवनद्वारमुपागतोऽस्मि। प्रदोषसमये रजनीमुखे संजाते सति। किं कुर्वति प्रदोषसमये। विष्वद्रीचिभुवनेषु विष्वगञ्चतीति विष्वद्र्यङ् तस्मिन् विष्वद्रीचि। 'विष्वग्देवयोरद्र्यञ्चतौ क्वौ'। सर्वस्मिन् पृथ्वीमण्डले प्रतिक्षणं कृष्णतां पुष्णाति पुष्टिं नयति सति। पुनश्च किं कुर्वति प्रदोषसमये। इति ईदृशं वचनं सत्यतां नयतीव। इतीति किम्। सर्वं विष्णुमयं जगत्। एतावता किमुक्तं भवति। सर्वं विष्णुमयं जगदित्यसत्यं कवेरिति भावः॥

पुनश्च केषु सत्सु महादेवीभवनद्वारमुपागतोऽस्मि। वनमृगेषु, वनश्वापदेषु सत्सु। किं कुर्वत्सु वनमृगेषु। यथास्थानं यथात्मीयस्थितिस्तत्र उपसरत्सु सत्सु। कथम्। तदनु तत्पश्चात्। प्रदोषसमयादनन्तरमित्यर्थः। पुनः कथंभूतेषु वनमृगेषु। कामिनीप्रसाधनेष्विव यथा कामिनीनां प्रसाधनानि उद्वर्तनस्नानधूपनानुलेपनादीनि परिकर्माणि यथास्थानमुपसरन्ति। पुनश्च केषु सत्सु। चिक्किरनिकरेषु चिक्किराणां पक्षिणां निकरेषु समूहेषु सत्सु। कथंभूतेषु चिक्किरनिकरेषु। वासराश्रयोन्मुखेषु वासरः शयनयोग्यः स चासावाश्रयो मालयादिस्तत्र उन्मुखास्तत्परास्तेषु। पुनः कथंभूतेषु। प्रवसितेष्विव यथा प्रवसिताः पथिकाः वासराश्रयोन्मुखा भवन्ति। पुनश्च कासु सतीषु। शार्दूलसमितिषु व्याघ्रसंततिषु(कसान्तिषु)(?)। कथंभूतासु। स्ववासाङ्गणभागिनीषु स्वेषां वासाङ्गणानि तानि भजन्ते इत्येवंशीलाः स्ववासाङ्गणभागिन्यस्तासु। कास्विव। वारवनितास्विव वारः सेवावसरस्तस्य संबन्धिन्यो या वनिता वारवनिताः। वेश्या इत्यर्थः। तास्विव। यथा वारवनिताः स्ववासाङ्गणभागिन्यो भवन्ति। पुनश्च केषु सत्सु। संध्योपासनाञ्जलिमुकुलेषु संध्योपासनस्य यानि अञ्जलिमुकुलानि

पल्लवरुचि कपिशकुसुमस्तबकसुन्दरे कुसुम्भांशुकपिहितगौरीपयोधरविडम्बिनि धूर्जटिजटाज्योतिरमन्दमन्दाकिनीडिण्डीरपिण्डहृदयंगमे पुरुहूतनिकेतकेतुरक्ताञ्चलकलितकलधौतकलशलक्ष्मीलिहि रोहिणीमुखचुम्बनसंगलितजतुरसारुणिताङ्गनिर्माणे क्षणमुपतर्क्यमाणे, पुनरनतिचिरादेव निकटगतगगनापगातरङ्गसंगमादिव मनसिजोत्सवप्रसाधितसितातपत्ररोचिषि, योषिदोषधीनामधरदलेषु रागसंक्रमादिव पितामहमौलिमनोहरत्विषि, नि-

---

त्येवंशील स तथा तस्मिन् । पुनः कथंभूते । मनीपतरागोक्ततरुणपल्लवरुचि मनीपतरा अर्थात् चन्द्रस्य निकटवर्तिनो ये अशोकानां तरुणपल्लवाः प्रत्यग्रकुम्पलानि तद्वत् रुक् दीप्तिः रक्तत्वं यस्य स तथा तस्मिन् । पुनः कथंभूते । कपिशकुसुमस्तबकसुन्दरे कपिशः श्यावः धूम्रारुणः पाण्डुररक्तो योऽसौ कुसुमस्तबकः अर्थात् अशोकपुच्छगुलुच्छकः तद्वत् सुन्दरो मनोहरस्तस्मिन् । पुनः कथंभूते । कुसुम्भांशुकपिहितगौरीपयोधरविडम्बिनि कुसुम्भेन रागद्रवेण उपलक्षितं यदंशुकं सूक्ष्मवस्त्रं तेन पिहित आवृतो योऽसौ गौरीपयोधरः तं विडम्बयति तिरस्करोति इत्येवंशीलः स तथा तस्मिन् । पुनः कथंभूते । धूर्जटिजटाज्योतिरमन्दमन्दाकिनीडिण्डीरपिण्डहृदयंगमे धूर्जटेः श्रीमहादेवस्य जटाज्योतिभिरमन्दः प्रचुरो योऽसौ मन्दाकिनीडिण्डीरपिण्डः गङ्गानदीफेनपिण्डस्तद्वत् हृदयंगमे मनोहरे । मनआसक्त इत्यर्थः । पुनः कथंभूते । पुरुहूतनिकेतकेतुरक्ताञ्चलकलितकलधौतकलशलक्ष्मीलिहि पुरुहूत इन्द्रः पूर्वदिक्स्वामी तस्य निकेतः प्रासादस्तत्र ये केतवो ध्वजास्तेषां रक्ताञ्चलैः कलितो वेष्टितो योऽसौ कलधौतकलशः कनककुम्भः रूप्यकलशो वा । 'कलधौतं रूप्यहेम्नोः कलधौतं कलध्वनौ' । तस्य या लक्ष्मी रक्तत्वं तां लेढीति आस्वादयतीति स तथा तस्मिन् । पुनः कथंभूते । रोहिणीमुखचुम्बनसंगलितजतुरसारुणिताङ्गनिर्माणे रोहिणी कुमुदबन्धुपो भार्या तस्या मुखस्य चुम्बनेन संगलितो निर्गलितो योऽसौ जतुरसः तेनारुणितमव्यक्तरागीकृतं अङ्गनिर्माणं शरीरनिर्मितं यस्य स तथोक्तस्तस्मिन् । पुनः कथंभूते । पुनरपि अनतिचिरादेव शीघ्रमेव रक्तत्वादनन्तरं मनसिजोत्सवप्रसाधितसितातपत्ररोचिषि मनसिजस्य उत्सवे महोत्सवे प्रसाधितमुद्धृतं यत् सितातपत्रं शुक्लच्छत्रं तद्वद्रोचिः शोभा यस्य स तथा तस्मिन् । उज्ज्वलतां प्राप्त इत्यर्थः । कस्मात् । उत्प्रेक्षते—निकटगतगगनापगातरङ्गसंगमादिव निकटगता समीपवर्तिनी या गगनापगा वियद्गङ्गा तस्यास्तरङ्गा महान्तः कल्लोलास्तेषां संगमादिव संसर्गादिव । पुनः कथंभूते । पितामहमौलिमनोहरत्विषि पितामहस्तस्य मौलिः मस्तकस्तद्वत् मनोहरा उज्ज्वला त्विट् कान्तिर्यस्य स तथा तस्मिन् । एवंविधं शुक्लत्वं चन्द्रे कुत आगतमित्याह—योषिदोषधीनामधरदलेषु रागसंक्रमादिव योषितामधरेषु औषधीनां दलेषु पल्लवेषु रागस्य रक्तिम्नः संक्रमात् संचरणात् इव । यथासंख्योत्प्रेक्षालंकारः । रक्तत्वं

करविलम्बितकुसुमसरसौरभसुभगेषु स्रगाजीविनामापणरङ्गभागेषु,

परिवर्तमानकाश्मीरमलयजागुरुपरिमलोद्गारसारेषु सौगन्धिकानां विपणिविस्तारेषु,

ससंभ्रममितस्ततः परिसर्पता सभोगोपकरणाहितादरेण पौरनिकरेण निजविलासदर्शनाहंकारिमनोरथाभिरवधारितविटमुधाप्रश्नसंकथाभिः सर-

---

लोभ गता ये मधुपास्तेषां संबाधो मेलापकस्तेन निरुध्यमान. आध्रियमाणो(१) विधोश्चन्द्रस्य दीधितीना किरणाना प्रसरो व्याप्तिर्येषा उदघटितवातायनविवराणा तानि तथोक्तानि तेषु ॥

पुनश्च केषु सत्सु महादेवीभवनद्वारमुपागतोऽस्मि। स्रगाजीविना मालाकारिणां आपणरङ्गभागेषु सत्सु हट्टाग्रभागेषु सत्सु। कथभूतेषु आपणरङ्गभागेषु। करविलम्बितकुसुमसरसौरभसुभगेषु करेषु करैर्वा विलम्बिता उच्चलिता ये कुसुमसरा पुष्पहारास्तेषा सौरभेण परिमलेन सुभगा अतिमनोहरास्तेषु ॥

पुनश्च केषु सत्सु महादेवीभवनद्वारमुपागतोऽस्मि। सौगन्धिकाना विपणिविस्तारेषु गन्धद्रव्यविक्रयिणा वणिजा हट्टप्रसरेषु सत्सु। कथभूतेषु विपणिविस्तारेषु। परिवर्तमानकाश्मीरमलयजागुरुपरिमलोद्गारसारेषु काश्मीरदेशे भव कुङ्कुम काश्मीरम्, मलयपर्वते जातं चन्दनं मलयजम्, अगुरु न गुरु अगुरु कृत्रिमतया लघुत्वगुणमहित राजार्हापरनामक लोहसंज्ञमगुरुच्यते, काश्मीरमलयजागुरूणि परिवर्तमानानि पलट्यमानानि यानि काश्मीरमलयजागुरूणि तेषां परिमलोद्गारा गन्धप्रादुर्भावास्तै सारा अतिमनोहरा ये विपणिविस्तारास्ते तथा तेषु ॥

पुनश्च केषु सत्सु महादेवीभवनद्वारमुपागतोऽस्मि। राजवीथीमण्डलेषु राजमार्गसमूहेषु सत्सु। कथभूतेषु राजवीथीमण्डलेषु। पौरनिकरेण नगरलोकसमूहेन समाकुलेषु व्याप्तेषु। किं कुर्वता पौरनिकरेण। ससंभ्रम सादरं इतस्ततो यत्र तत्र परिसर्पता समन्ताद्गच्छता पर्यटता। कथभूतेन पौरनिकरेण। सभोगोपकरणाहितादरेण सभोगस्य उपकरणानि पर्यङ्कहंसतूलपट्टहताम्बूलपटलिकापुष्पचन्दनादीनि तेषु आहित. कृत आदरः प्रयत्नो येन स तथा तेन। न केवल पौरनिकरेण समाकुलेषु राजवीथीमण्डलेषु, अपि तु पण्याङ्गनासमितिभिः वेश्यासमूहै. समाकुलेषु। कथभूताभि पण्याङ्गनासमितिभि.। निजविलासदर्शनाहंकारिमनोरथाभिः निजाना विलासाना हावभावविभ्रमादीना दर्शनेन कामुकानां विलोकनकरणेन अहंकारिण सदा मनोरथा दोहदानि यासां तास्तथोक्ताभि.। पुन. कथभूताभिः। अवधारितविटमुधाप्रश्नसंकथाभि अवधारिता विटाना कामुकानां मुधाप्रश्नसंकथा फल्गुनयोगसंकथनानि वार्ता. ताभिस्तथोक्ताभि। ये ये फल्गुना निरर्थकेन इच्छन्ति किं ग्रहिष्यसीति प्रश्न कुर्वन्ति तान् प्रति संभाषण वेश्या न कुर्वन्ति। तासा वैलक्षण्यात् ये ये अर्थिन· सन्ति पृच्छन्ति तान्

---

१ 'आक्रियमाण' इति स्यात्.

तरमवस्थान्तरमुपगतवति विरहिणीजने किं पञ्चभिरपि बाणैर्भवतः प्रहर्तु युक्तमिति प्रवसितपथिकवनिताभिरुपालभ्यमाने च कुसुमधनुषि,

अहमपि तदाहो मनसिजातिशायिशरीरपरिकर कामिनीमुखकमलमधुकर विभ्रमदिदृक्षयेव विलासिनीनां नयनेषु प्रतिफलन्तीभिः लावण्यरसपिपासयेव कपोलेषु विलुण्ठमानाभिश्चुम्बनाभिलाषधिषणयेवाधरेषु परिस्फुरन्तीभिः परामर्षमनीषयेव स्तनतटेषु चोद्दण्डया प्रवृत्ताभिरमृतमरीचिदीधितिभिराज्याहुतिभिरिव संधुक्ष्यमाणमदनदहनः, रतिरहस्यवय-

---

मेव आत्मनैव शुष्कशरपमलिनीवनादपि कष्टतरमवस्थान्तरमुपगतवति सति। किं तु अमुष्मात् प्रत्यक्षीभूतात् चन्द्रात् च कष्टतरमवस्थामुपगतवति सति। कथभूतात् अमुष्मात् चन्द्रात्। उत्पातरविमण्डलात् अयं चन्द्रो न भवति किं तु विरहिणीना उत्पातरविमण्डलो वर्तते। पुन कथभूतात्। प्रियतमाधरामृतवर्षावग्रहात् प्रियतमस्य कान्तस्य यदधरामृत ओष्ठपानपीयूष तस्य वर्षो वृष्टि तस्य अवग्रह प्रतिबन्ध वृष्टिरोधो यस्मिन् चन्द्रे स तथोक्तस्तस्मात्। उक्त च—'वृष्टिर्वर्षं तद्विघातेऽवग्रहावग्रहौ समौ।' कथंभूतादमुष्मात्। अकाण्डजन्मन उत्पातोद्भवात्। कि कुर्वत अमुष्मात्। करान्किरणान्विकिरतः विक्षिपतः। कथभूतान्। कृशानुकणगर्भानिव अग्निचूर्णसन्भृतमध्यप्रदेशानिव उत्पातरविमण्डलादिव। विशेषणमनुपपन्नमपि उपपन्नमेव। तदाह—'अभिधेयस्यातिथ्यं तदनुपपन्न' ·· ·· · । यत्र स्युर्वक्राणामुन्मादीत्यर्थमुक्त वा॥'

तदा तस्मिन् चन्द्रोदये काले अहो मनसिजातिशायिशरीरपरिकर मनसिजात् कन्दर्पादपि अतिशायी अतिशयवान् शरीरपरिकर कायसमुदायो यस्य मारदत्तमहाराजस्य स तथोक्तस्तस्य संबोधनं हे तथोक्त हे मारदत्तमहाराज, हे कामिनीमुखकमलमधुकर कामिनीनामुत्तमनायिकाना मुखान्येव कमलानि तन्मकरन्दास्वादने मधुकरो भ्रमरः तस्य संबोधन हे तथोक्त, अहमपि महादेवीभवनद्वारमुपागतोऽस्मि। अह कथंभूत। अमृतमरीचिदीधितिभि· चन्द्रकिरणै संधुक्ष्यमाणमदनदहनः संधुक्ष्यमाण उद्दीपीक्रियमाण मदन एव कन्दर्प एव दहनो यस्य स तथोक्त। कथभूताभिरमृतमरीचिदीधितिभि। आज्याहुतिभिरिव घृतस्य आहुतिभिरिव। कथंभूताभिराज्याहुतिभि·। विलासिनीनां नयनेषु प्रतिफलन्तीभिः प्रतिबिम्बमागच्छन्तीभिः। किमर्थं प्रतिफलन्तीभि। विभ्रमदिदृक्षयेव भ्रूक्षेपशोभादर्शनेच्छया इव। पुनः किं कुर्वन्तीभिराज्याहुतिभि। विलासिनीना कपोलेषु विलुण्ठमानाभि विलुण्ठन्तीभि। किमर्थं विलुण्ठमानाभि। लावण्यरसपिपासयेव लावण्यमेव रस· तस्य पिपासया इव पानेच्छया इव। पुन किं कुर्वन्तीभिराज्याहुतिभि। विलासिनीना अधरेषु परिस्फुरन्तीभि· समन्तात् चमत्कुर्वन्तीभि। किमर्थं परिस्फुरन्तीभि। चुम्बनाभिलाषधिषणयेव······ · · । पुनः कि कुर्वन्तीभिराज्याहुतिभि। विलासिनीना स्तनतटेषु उद्दण्डया प्रवृत्ताभिः······

परिषदम् आलापसंभ्रमेण बलमुख्यान् उपासनोपचारेण पुरोधसम् उपभोगपारितोषिकेण राजकुमारकान् पादवन्दनेन पितृपितामहसंबन्धवतीर्जरतीः अनुव्रजनविनयेन च गुरून्, आसन्नचरचामरधारिणीभुजशिरसि विन्यस्तवामबाहुः, अपरकराङ्गुलिनिर्देशेन विनोदरदीनामुपान्तवर्तिनो जनस्य मन्दिराणि दर्शयन्, दृष्टिप्रदानसंभावितान्तःपुरसमारक्षकलोकः, स्मरनिशितविशिखाग्रभागानिवोपहसता विडम्बयतेव विद्रुमोद्भेदशिखाडम्बरमुल्लासयतेव सहविहरन्तीनां विलोचनानि विस्तारयतेव दशनरश्मीनुपचि-

---

पीठक्षिति॰ चरणावशेषपीठभूमि॰ यैस्ते तथोक्तास्तान् । पुनश्च किं कृत्वा । अवलोकनप्रसाद॰दानेन मन्त्रिपरिषद सचिवसभां विसृज्य अवलोकन समुखनिरीक्षण तेनोपलक्षित प्रसाददान वस्त्राभरणादिसमर्पण तेन अवलोकनप्रसाददानेन । पुनश्च किं कृत्वा । बलमुख्यान् सेनापतीन् आलापसम्भ्रमेण आभाषणादरेण विसृज्य । पुनश्च किं कृत्वा । पुरोधस त्रिकालज्ञानिन पूज्यब्रह्माणं उपासनोपचारेण पादपतनादिसेवाव्यवहारेण विसृज्य । उक्तं च—'वेदवेदाङ्गतत्त्वज्ञो जपहोमपरायण॰ । आशीर्वादपरो नित्यमेष राज्यपुरोहित ॥' पुनश्च किं कृत्वा । उपभोगपारितोषिकेण वस्त्राभरणताम्बूलपुष्पचन्दनाद्युपभोगस्य पारितोषिकेण हर्षप्रदानेन राजकुमारकान् राजपुत्रान् विसृज्य । पुनश्च किं कृत्वा । पादवन्दनेन चरणावलम्भेन जरती वृद्धस्त्री विसृज्य । कथभूता जरती । पितृपितामहसंबन्धवतीः पितुर्यशोधर्महाराजस्य पितामहस्य यशोबन्धुरमहाराजस्य सबन्ध संगधाता(?)विद्यते यासां ताः पितृपितामहसंबन्धिन्यस्तास्तथोक्ता॰ । पुनश्च किं कृत्वा । गुरून् उपाध्यायादीन् अनुव्रजनविनयेन पृष्ठतो गमनपूजनेन विसृज्य । पुन कथभूतोऽहम् । आसन्नचरचामरधारिणीभुजशिरसि विन्यस्तवामबाहु आसन्नचरचामरधारिणीना स्त्रीणा समीपचरप्रकीर्णकवीजनवतीना स्त्रीणा भुजशिरसि स्कन्धप्रदेशे समारोपितसव्यभुजदण्ड॰ । पुन किं कुर्वन्नहम् । अपरकराङ्गुलिनिर्देशेन विनोदरदीना क्रीडागजाना उपान्तवर्तिनो जनस्य भिण्डादेर्मन्दिराणि गृहस्थानानि दर्शयन् यूयमत्र तिष्ठतेति कथयन् । पुन॰ कथभूतोऽहम् । दृष्टिप्रदानसंभावितान्तःपुरसमारक्षकलोक॰ दृष्टिप्रदानेन संमुखावलोकनेन सभावितोऽनुकूलित अन्त पुरस्य सबन्धी समारक्षकाणा लोकस्त्रीणा समूहो येन स तथोक्तः । पुन॰ कथभूतोऽहम् । कर्पूरतैलप्रबोधितेन प्रज्वालितेन करदीपिकाचक्रवालेन कैरुद्धृताना दीपिकाना चक्रवालेन मण्डलेन परिवृतो वेष्टित । किं कुर्वता करदीपिकाचक्रवालेन । स्मरनिशितविशिखाग्रभागान् उपहसता तिरस्कुर्वता इव । स्मरस्य निशिता तीक्ष्णा ये विशिखाग्रभागास्तान् उपहसता इव । पुनः किं कुर्वता । विद्रुमोद्भेदशिखाडम्बरं विडम्बयता इव तिरस्कुर्वता इव विद्रुमाणा प्रवालवृक्षाणां उद्भेदा अङ्कुरास्तेषा शिखानामग्राणा आडम्बरमाटोप हसता इव । पुन॰ किं कुर्वता । सहविहरन्तीनां सहगच्छन्तीना स्त्रीणां विलोचनानि उल्लासयतेव ।

वेंशिकानां चापकोटीरिव विफलयन्त्या, नयनविभ्रमेण बाणाडम्बरमिव च निराचक्षाणया, वचनसौष्ठवेन गोपुरपरिघानिव प्रत्यादिशन्त्या, स्तनाभोगेन कपाटयुगलमिवापकुर्वाणया, रोमराजिनिर्गमेन वेत्रलतामिवाधिक्षिपन्त्या, ऊरुभारेण तोरणस्तम्भानिव विजयमानया, मेखलाजालेन चन्दनमालामिव पुनरुक्तयन्त्या, चरणनखस्फुरितेन रङ्गवलिमणीनिवासहमानया, वैकक्ष्यकलक्ष्यदक्षिणेतरकक्षान्तरविनिक्षिप्तकौक्षेयिकया प्रतापानुगतयेव मन्मथकीर्त्या, भुजगाधिष्ठितयेव कल्पलतिकया, सतडिद्गुणयेव वलाहकमालया, लाञ्छनलेखालंकृतयेव चन्द्रकलया, मधु-

---

च—'द्वास्थैर्द्वारे प्रतीहार'। कथभनया प्रतीहारपालिकया। अमृतमतिमहादेवीलावण्यशेषादिवोत्पन्नया अमृतमतेर्महादेव्याः लावण्यशेषात् उद्धरितलावण्यात् उत्पन्नया इव। मनाग् महादेव्या रूपं धरन्त्या इत्यर्थः। किं कुर्वत्या प्रतीहारपालिकया। भ्रूविजृम्भितेन व्यापारेण अन्तर्वंशिकानां राज्ञीनां रक्षे नियुक्तानां पुरुषाणां चापकोटीः धनुरग्राणि विफलयन्त्या तिरस्कुर्वत्या इव। पुनः किं कुर्वत्या। नयनविभ्रमेण लोचनशोभया अन्तर्वंशिकानां बाणाडम्बरं शराटोपं निराचक्षाणया इव। पुनः किं कुर्वत्या। वचनसौष्ठवेन वाक्प्रगल्भत्वेन वाग्बलेन गोपुरपरिघान् प्रतोलीद्वारार्गलानि प्रत्यादिशन्त्या इव निराकुर्वत्या इव। वचनेन पुरुषान् द्वारपालकान् चालयन्त्या इव। पुनः किं कुर्वत्या। स्तनाभोगेन स्तनोद्घाटनेन कपाटयुगलं अररद्वयं अपकुर्वाणया इव कपाटौ उद्घाटयन्त्या इव। पुनः किं कुर्वत्या। रोमराजिनिर्गमेन रोमराजीदर्शनेन अन्तर्वंशिकानां वेत्रलतामधिक्षिपन्त्या तिरस्कुर्वत्या इव। पुनः किं कुर्वत्या। ऊरुभारेण ऊरुस्थलेन तोरणस्तम्भान् विजयमानया इव निराकुर्वाणया इव। 'विपराभ्यां जेः' इत्यात्मनेपदम्। पुनः किं कुर्वत्या। मेखलाजालेन भगच्छादनवस्त्ररचनेन चन्दनमालां पुनरुक्तयन्त्या इव द्विगुणीकुर्वाणया इव। पुनः किं कुर्वत्या। चरणनखस्फुरितेन पादनखतेजसा कृत्वा रङ्गवलिमणीन् नानावर्णरत्नचूर्णरचितमण्डनविशेषान् असहमानया इव तिरस्कुर्वाणया इव। कथंभूतया प्रतीहारपालिकया। वैकक्ष्यकलक्ष्यदक्षिणेतरकक्षान्तरविनिक्षिप्तकौक्षेयिकया वैकक्ष्यवत्। तिर्यग्वक्षसि विक्षिप्तं वस्त्रं वैकक्ष्यकमुच्यते। वैकक्ष्यवत् लक्ष्येते वैकक्ष्यकलक्ष्ये ईदृशौ दक्षिणेतरकक्षान्तरयोः अपसव्यबाहुमूलमध्ययोर्विनिक्षिप्ता उत्तरासङ्गवस्त्रवत् धृता कौक्षेयिका खड्गो यया सा तथोक्ता तया। पुनः कथंभूतया। प्रतापानुगतया प्रतापसहितया मन्मथकीर्त्या इव। पुनः कथंभूतया। भुजगाधिष्ठितया खड्गद्वययुक्तत्वात् सर्पद्वयावेष्टितया कल्पलतिकया इव श्रीचन्दनवल्ल्या इव। पुनः कथंभूतया। सतडिद्गुणया विद्युद्गुणसंयुक्तया वलाहकमालया इव मेघमालया इव। पुनः कथंभूतया। लाञ्छनलेखाल-

कितवोपचारवैशिकेन—इति सचाटुकारं देव, देवस्योपरि प्रसादनाय देव्याः पादयोः पतितायास्तदलक्तिकाविलं मे भालं किं न पश्यति देवः। अपि च—

नयननदनिदानैरेभिरश्रुप्रवाहैः
स्तनकलशमुखाग्रव्यग्रधारासहस्रैः।
सुतनु हृदयमध्यस्थे प्रियेऽस्मिन्भवत्या
कथमिह बहिरेषा सज्यते मज्जनश्रीः॥'

'खदिरिके, मामपि महादेवीं प्रत्येवमुपालभेथाः। ननु विदितमेवैतद्देव्याः यथा न स्वप्नेऽपि मे विप्रलम्भनकराः काश्चिदपि प्रवृत्तयः। किंतु तवैवेदमशेषं धूर्तविलसितम्। त्वं हि न भवसि सामान्येति किमहं न जाने। कुला-

---

प्रियया पर्याप्तत्वात् परिपूर्णत्वात् अस्मात् अस्मात् विषये कितवोपचारवैशिकेन कौटिल्योपचारनायिका अलं पूर्णम्। तथा इत्यमुना प्रकारेण सचाटुकारं मिथ्यास्तवनं यथा भवत्येवं हे देव हे राजन्, देवस्योपरि तवोपरि देव्याः प्रसादनाय प्रसन्नीकरणाय मे मम पादयोः पतितायाः देव्याश्चरणस्खलत्योर्लाक्षाया तदलक्तिकाविलं देव्यलक्तकचरणलाक्षारसेन आविलं लिप्तं मे मम भालं ललाटं किं न पश्यति देव किं न निरीक्षसे इति सचाटुकारम्॥

अपि च। **नयननदेत्यादि**। हे सुतनु हे शोभनकाये हे अमृतमतिमहादेवि, अस्मिन् प्रत्यक्षीभूते तव प्रिये प्राणवल्लभे हृदयमध्यस्थे सति अङ्कवर्तिनि सत्यपि भवत्या त्वया इह अस्मिन् तव शरीरे वा एषा प्रत्यक्षीभूता अश्रुप्रवाहैः कृत्वा मज्जनश्रीः स्नानलक्ष्मीः बहिर्बाह्ये कथं केन प्रकारेण क्रियते सज्यते। कथंभूतैः अश्रुप्रवाहैः। नयननदनिदानैः नयननदौ लोचनहृदौ निदानं आदिकारणं येषामश्रुप्रवाहाणां ते नयननदनिदानास्तैः। पुनः कथंभूतैरश्रुप्रवाहैः। एभिः प्रत्यक्षीभूतैः। पुनः कथंभूतैः। स्तनकलशमुखाग्रव्यग्रधारासहस्रैः स्तनावेव कलशौ कान्तिप्रेमरसामृतरसाधारत्वात् तयोर्मुखयोरग्रे व्यग्रा व्यापृता धाराणां छटानां सहस्रा येषां अश्रुपातानां ते तथोक्तास्तैः। रूपकालंकारः॥

राजा प्राह—हे खदिरिके धूर्ते, महादेवीं प्रति मामपि एवं मायाप्रकारेण उपालभेथाः. सनिन्दावचनं त्वं ब्रवीथाः। ननु अहो धूर्ते खदिरिके, विदितमेव ज्ञानमेवैतत् देव्याः यथा स्वप्नेऽपि, आस्तां तावत् अतिस्वप्नेऽपि, मे मम विप्रलम्भनकराः वञ्चनकराः काश्चिदपि का अपि प्रवृत्तयो न वर्तन्ते। किंतु तर्हि तवैव भवत्या एव इदं प्रत्यक्षीभूतं अशेषं समग्रं धूर्तविलसितं वञ्चनाचेष्टितम्। त्वं भवती हि यस्मात् न भवसि सामान्या सर्वलोकस्य ईदृशी किमहं न जाने। अपि तु जानाम्येव। तव भवत्याः परनरस्य सलक्षणो लोकस्य

तेन विकृतालापनर्तकैतवेन विकास्यमानलोचनः, समन्तादाकुलाकुलविरलीभवत्सकलपरिजने यक्षकर्दमखचितकर्पूरदलदन्तुरितजातरूपभित्तिनि मृगमदशकलोपलिप्तरजतवातायनविवरविहरमाणसमीरसुरभिते सान्द्रस्यन्दसंमार्जितामलकदेहलीशिरसि घुसृणरसारुणितमरकतपरागपरिकल्पितभूमितलभागे मनाक्स्मोदमानमालतीमुकुलविरचितरङ्गवलिनि अनवरतदह्यमानकालागुरुधूपधूमधूसरितवितानपर्यन्तावलम्बितमुक्ताफलमाले कूर्चस्थान-

---

विकृतालापनर्तकैतवेन विकास्यमानलोचन. आछाद्यमाननयन । कुब्जाश्च न्युब्जा गडुलपर्याया, वामनाश्च खर्वा ह्रस्वपर्याया, निखर्वाश्च मदूरा कथ्यन्ते । किराताश्च भिल्लवेषाः, कञ्चुकिनश्च शुद्धान्ता कुब्जवामनकिरातकञ्चुकिनस्तै । तत्र कुब्जाना विचित्रकृतम, वामनाना आलापा, किराताना नर्तनानि, कञ्चुकिना कैतवानि, विकृतानि च आलापाश्च नर्तनानि च कैतवानि च विकृतालापनर्तकैतव तेन विकास्यमानलोचन उल्लास्यमाननयन. । कथभूतैस्तै । सहेल युगपत् सलील वा अन्त पुरप्रचारिभि शुद्धान्तमध्ये प्रवर्तिभि । पुन कथभूतै. । अस्मद्दर्शनप्रवृत्तमनोनुरागवेगै अस्मद्दर्शनेन अस्माक विलोकनेन प्रवृत्ता सजाता. मनोनुरागवेगा हृदयकृत्रिमस्नेहोत्सुकत्वानि येषा कुब्जादीना ते तथा तैः । कथभूते वासभवने । समन्तादाकुलाकुलविरलीभवत्सकलपरिजने समन्तात् सर्वत्र आकुलाकुलोऽतिव्याकुलः सन् विरलीभवत् दूरीभवत् सकल परिजन यत्र वासभवने तत्तथोक्त तस्मिन् । पुन. कथभूते । यक्षकर्दमखचितकर्पूरदलदन्तुरितजातरूपभित्तिनि । 'कङ्कोलागुरुकर्पूरकस्तूरीयक्षकर्दम ।' कुङ्कुमश्रीखण्डद्वय चेति केचित् । यक्षकर्दमेन खचिता लिप्ता. कर्पूरदलै कर्पूरखण्डै. दन्तुरिता. सजातदन्ता इव जाता जातरूपभित्तय सुवर्णभित्तयो यस्य तत्तथोक्त तस्मिन् । पुन कथभूते । मृगमदशकलोपलिप्तरजतवातायनविवरविहरमाणसमीरसुरभिते मृगमदस्य कस्तूरिकाया शकलै. खण्डैरुपलिप्तानि उपदिग्धानि यानि रजतवातायनानि रूप्यमयगवाक्षजालानि तेषा विवरेषु विहरमाण सचरन् योऽसौ समीरस्तेन सुरभित सुगन्धित तस्मिन् । पुन कथभूते । सान्द्रस्यन्दसमार्जितामलकदेहलीशिरसि सान्द्रो विलेपनविशेष. तस्य स्यन्देन रसेन समार्जित लिप्त आमलकस्य स्फटिकमणेर्देहलीशिरो गृहावग्रहिणीमस्तक यस्य तत्तथा तस्मिन् । पुन कथभूते । घुसृणरसारुणितमरकतपरागपरिकल्पितभूमितलभागे घुसृणरसेन कुङ्कुमद्रवेणारुणितो अव्यक्तरागो योऽसौ मरकतपरागो नीलमणिचूर्ण तेन परिकल्पितो रचितो भूमितलभागो यस्य तत्तथा तस्मिन् । मरकतपरागशब्देनात्र धूलीशालवत् मरकतखण्डानि ग्राह्याणि । पुन कथभूते । मनाक्स्मोदमानमालतीमुकुलविरचितरङ्गवलिनि मनाक् ईषन्मोदमाना विकसन्ती या मालती जाती तस्या मुकुलानि कुड्मलानि तैः विरचिता शोभिता रङ्गवलिर्नानावर्णचूर्णरचितमण्डनविशेषो यत्र तत्तथा तस्मिन् । पुन. कथभूते । अनवरतदह्यमानकालागुरुधूपधूमधूसरितवितानपर्यन्तावलम्बितमुक्ताफलमाले

नामनि वासभवने, सरसचन्दनतरुस्तम्भिकाचतुष्टयमध्यावतीर्णमुच्चलत्पारापतपतङ्गपेशलप्रतिपादोपरिविन्यस्तपादमण्डलं तरङ्गितदुकूलपटप्रसाधितहंसतूलिकमन्तरान्तरा हरिचन्दनस्थासकाङ्कितपर्यन्तमविरलोपान्तपरिकल्पितधूपकूपिकाविवरविसरद्धूमपटलमुभयपार्श्वोपदर्शितमणिप्रदीपिकमुपधानद्वयोत्तम्भितपूर्वापरभागमुत्फुल्लकमलाकरमिव सरोवरमम्बुधरपरिवारितमिव शंभुशिखरिणममरासुरगुरुमध्यवर्तिनमिव तुहिनकिरणमपरोत्तरसेतुबन्धाधव-

---

तरणि मार्गो यस्मिन् वासभवने तत्तथा तस्मिन्। पुनः कथंभूते। सततनन्दप्रासादोपरितनभागवर्तिनि सप्ततलः सप्तभूमो योऽसौ प्रासादो राजसदनं तस्य उपरितनभागे न्यवसत्तत् भवनं वर्तते इत्येवंशीलं तत्तथा तस्मिन्। पुनः कथंभूते। मनोजविलासगृहनिवासतामरसनामनि मनसिजविलासः कामसेवा स एव गृहः इव पद्मसुन्दरत्वात् तस्य निवासाय स्थितये तामरसं कमलमीदृशं नाम यस्य वासभवनस्य तत्तथा तस्मिन्। कथंभूतं यत्सुन्दरं शयनीयमस्ति। सरसचन्दनतरुस्तम्भिकाचतुष्टयमध्यावतीर्णं सरसा नवीना या चन्दनतरुस्तम्भिकाः श्रीखण्डवृक्षलघुस्तम्भास्तासां चतुष्टयम्। पादचतुष्टयमित्यर्थः। तस्य मध्ये अवतीर्णम् आगतम्। पुनः कथंभूतम्। उच्चलत्पारापतपतङ्गपेशलप्रतिपादोपरिविन्यस्तपादमण्डलम् उच्चलन्तः उत्कर्षेण अव्यक्तशब्दान् कुर्वन्तः पारापतपक्षिणो येषु वर्तन्ते पारापतपतङ्गाः पेशला मनोहरा ये प्रतिपादाः पादचतुष्टयाधःस्थितपादाः प्रतिपादास्तेषामुपरि विन्यस्तम् आरोपितं पादमण्डलं पल्यङ्कपादचतुष्टयं यत्र यत्सुन्दरं तत्तथोक्तम्। पारापतशब्दः स्त्रीपुरुषयोः कामोद्रेकं जनयति इति कारणादित्यर्थः। पुनः कथंभूतम्। तरङ्गितदुकूलपटप्रसाधितहंसतूलिकम् तरङ्गिता लहरिता नानाविक्षेपेण निम्नोन्नतीभूता दुकूलपटप्रसाधिता पट्टकूलवस्त्ररचिता हंसतूलिका प्रान्तरणनिक्षेपो यत्र तत्तथोक्तम्। पुनः कथंभूतम्। अन्तरान्तरा हरिचन्दनस्थासकाङ्कितपर्यन्तम् अन्तरान्तरा मध्ये मध्ये हरिचन्दनस्थासकैः परमोत्तमचन्दनहस्तप्रतिबिम्बैरङ्कितौ चिह्नितौ पर्यन्तौ प्रान्तौ यस्य तत्तथोक्तम्। कथंभूतमिव। उत्फुल्लकमलाकरं विकसितकमलवनं सरोवरमिव। पुनः कथंभूतम्। अविरलोपान्तपरिकल्पितधूपकूपिकाविवरविसरद्धूमपटलम् अविरला अविच्छिन्नानि निरन्तरवर्तिन्यः उपान्तेषु समीपेषु परिकल्पिता रचिता या धूपकूपिका धूपघटिकास्तासां विवरेभ्यो विसरन्ति प्रसरन्ति धूमपटलानि पर्यायान्तरसमूहा यत्र तत्तथोक्तम्। कथंभूतमिव। अम्बुधरपरिवारितं कालमेघपरिवेष्टितं शंभुशिखरिणं कैलासपर्वतमिव। पुनः कथंभूतम्। उभयपार्श्वोपदर्शितमणिप्रदीपिकम् उभयपार्श्वयोः वामदक्षिणसमीपयोरुपदर्शिते समीपयोः स्थापिते मणिप्रदीपके रत्नप्रदीपिके यस्य तत्तथोक्तम्। कथंभूतमिव। अमरासुरगुरुमध्यवर्तिनं बृहस्पतिशुक्रमध्यस्थितं तुहिनकिरणमिव परिपूर्णचन्द्रमण्डलमिव। पुनः कथंभूतम्। उपधानद्वयोत्तम्भितपूर्वापरभागम् उपधानयोर्द्वयेन उच्छीर्षकयुगलेन उत्तम्भितौ

द्रमिव मन्दाकिनीप्रवाहमुन्मुषितमात्रेणापि तरङ्गान्तरालविहितसुखसंवेशमनेकविस्मयनीयशरमहार्णवेशकरं यन्त्रमुन्नगमन्वविशम् ।

यतः शयनतल्पमलंकुर्वतीमपरामिव लक्ष्मीम्, अनिमिषनिवासावसरलोकम्बुसंसुधावतीर्णामिव सरस्वतीम्, अबलारूपपरिणतामिव कलासमितिम्, उपात्तमानुषीभावामिव सागराम्बराम्, अविरोधितात्मशरीरामिव राज्याधिदेवताम्, अखिलकुसुमसारस्थानिमिव सौत्सुकमुपागताम्, अनङ्गतोरणस्तम्भमिव चरणपल्लवाभिरामाम्, अनङ्गभूषणावनिमिव स्फुरन्मणिपरम्पराम्, अनङ्गसरसीमिव पूर्वानुसृतवलयाभोगाम्, अनङ्गमण्डपिकामि-

---

पूर्वपश्चिमभागौ विरोधसम्बन्धं यस्य तत्तथोक्तम् । कर्ममूलमिव । अधरोत्तरसेतुबन्धावसन्नं अधरस्मिन् अधोभागे उत्तरस्मिन् पूर्वभागे सेतुबन्धाभ्यां अवसन्नं भिन्नं मन्दाकिनीप्रवाहमिव गङ्गाप्रवाहमिव । यथार्थम्भोऽस्मार्थकरं । पुनः कर्ममूलम् । उन्मुषितमात्रेणापि आकृष्टमात्रेणापि तरङ्गान्तरालस्य आयततरमध्येन निर्मितं सुखसंवेशो यत्रासनसमुदायं यत्र तरङ्गान्तरालविहितसुखसंवेशम् । पुनः कर्ममूलम् । अनेकविस्मयनीयस्मरमहार्णवेशकरम् अनेकान् बहून् विस्मयनीयान् आश्चर्यकरान् स्मरमहावेशान् कामकृतावेशान् करोतीति अनेकविस्मयनीयस्मरमहावेशकरम् ॥

अत एव एतस्मात् यन्त्रमुन्नगगृहादनन्तरं यस्मात् उपवेशनमनन्तरं शयनतल्पं च अलंकुर्वतीं मम पट्टमहिषीमुपविशन्तीं तां प्रसिद्धां अमृतमतिमहादेवीं अमृतमतिनाम्नीं पट्टमहिषीं अपरस्यां दृष्टवान् । कर्ममूलां ताम् । अपरां द्वितीयां लक्ष्मीमिव राज्याधि-मिव । पुनः कर्ममूलं ताम् । अनिमिषनिवासात् स्वर्गलोकात् अवतीर्णामिव सरस्वतीमिव । पुनः कर्ममूलम् । अबलारूपपरिणतां स्त्रीरूपेण संजातां कलासमितिमिव द्वासप्ततिकलाभेदमिव । पुनः कर्ममूलम् । उपात्तमानुषीभावां गृहीतमनुषीस्वरूपां सागराम्बरामिव पृथ्वीमिव । पुनः कर्ममूलाम् । अविरोधितात्मशरीरां प्रत्यक्षलक्ष्यमाणां राज्याधिदेवतामिव राज्यस्याधिष्ठातृदेवतामिव । पुनः कर्ममूलम् । सौत्सुकमुपागतां सौत्सुक्येन प्राप्तां अखिलकुसुमसारस्थानिमिव सर्वलोकस्य आवेलासितमिव । पुनः कर्ममूलाम् । चरणपल्लवाभिरामां मनोहरां अनङ्गतोरणस्तम्भमिव कंदर्पतोरणस्तम्भमिव । यथा अनङ्गतोरणस्तम्भ पल्लवाभिरामा भवति । पुनः कर्ममूलम् । स्फुरन्मणिपरम्परां देदीप्यमानपादाभरणमालां अनङ्गभूषणावनिमिव । यथा अनङ्गभूषणावनिः स्फुरन्मणिपरम्परा भवति । पुनः कर्ममूलम् । पूर्वानुसृत क्रमेण सेवितवलयाभोगं कङ्कणविस्तारपरिपूर्णा यस्या या तथा तां अनङ्गसरसीमिव अनङ्गस्य तडागमिव । पुनः कर्म-

वोरुस्तम्भश्रिताम्, अनङ्गयोगाभ्यासभूमिमिव विशालजघनस्थलाम्, अनङ्गजयपताकामिव विततरोमराजिदण्डिकाम्, अनङ्गजलकेलिवापिकामिव गम्भीरनाभिमण्डलाम्, अनङ्गावतरणवसतिमिव वलिविराजिताम्, अनङ्गायुधयष्टिमिव मुष्टिमितमध्यभागाम्, अनङ्गशरासारवृष्टिमिव परिपूर्णपयोधराम्, अनङ्गवनवसुधामिव भुजलतानन्दिनीम्, अनङ्गादेशपत्रिकामिवालकलिपिलिखितभालमध्याम्, अभ्युत्तिष्ठन्तीमिव भ्रूलताविलासेन, स्वागतप्रणयिनीमिव बिम्बाधरस्फुरितेन, विहितासनप्रदानामिव नीवीनिवेशोल्लासेन, पाद्यक्रियोपयुक्तामिव कर्णकण्डूविनोदाडम्बरितह-

---

भूताम्। ऊरुस्तम्भश्रितां ऊरुस्तम्भाभ्यां शक्तिस्थूणाभ्यां श्रिता आश्रिता ऊरुस्तम्भश्रिता तां अनङ्गमण्डपिकामिव कंदर्पोपकारिकावसतिमिव। पुनः कथंभूताम्। विशालजघनस्थलाम् विशालं विस्तीर्णं जघनस्थलं कट्यग्रभागो यस्याः सा विशालजघनस्थला तां अनङ्गयोगाभ्यासस्य ध्यानानुशीलनस्य भूमिः स्थानमिव। पुनः कथंभूताम्। विततरोमराजिदण्डिका वितता आयता रोमराजिदण्डिका रोमराजियष्टिर्यस्याः सा तथा ताम् अनङ्गजयपताकामिव · · ······ ·· । पुनः कथंभूताम्। गम्भीरनाभिमण्डलाम् · । अनङ्गजलकेलिवापिकामिव कंदर्पजलक्रीडादीर्घिकामिव। पुनः कथंभूताम्। वलिविराजितां वलिविराजिना उदररेखा यत्र सा ताम् अनङ्गावतरणवसतिमिव कंदर्पावतारगृहमिव। पुनः कथंभूताम्। मुष्टिमितमध्यभागा मुष्टिना संकुचितकरेण मितो मापितो मध्यभागो शरीरमध्यप्रदेशो यस्याः सा तथा ताम्। मध्यक्षामामित्यर्थः। अनङ्गायुधयष्टिमिव कंदर्पधनुर्दण्डमिव। यथा कंदर्पधनुर्मध्यभागे मुष्टिमितं भवति। पुनः कथंभूताम्। परिपूर्णपयोधरां परिपूर्णौ नातिह्रस्वौ नात्युन्नतौ नातिनिम्नौ परस्परं सलग्नौ पयोधरौ स्तनौ यस्याः सा तथा ताम्। अनङ्गशरासारवृष्टिमिव कंदर्पबाणसमूहवर्षणमिव। यथा पयोधरौ मेघौ जलवेगवद्वर्षणसहितौ भवतः। पुनः कथंभूताम्। भुजलतानन्दिनीं भुजलतामानन्दयतीत्येवं साधु भुजलतानन्दिनी बाहुलतयानन्दकारिणी तां अनङ्गवनवसुधामिव। यथा कंदर्पवनभूमिः लताभिरानन्दिनी भवति। पुनः कथंभूताम्। अनङ्गादेशपत्रिकामिवालकलिपिलिखितभालमध्यां अलकाश्चूर्णकुन्तलाः तेषां लिपिरक्षरविन्यासस्तया लिखितो भालमध्यो यस्याः सा तथा ताम्। यथा अनङ्गादेशपत्रिका शासनपत्रिका लिपिलिखितमध्या भवति तामिव। पुनः कथंभूताम्। भ्रूलताविलासेन नेत्रोपरिरोमराज्युल्लसनेन अभ्युत्तिष्ठन्तीमिव अभ्युत्थानं कुर्वतीमिव। पुनः कथंभूताम्। बिम्बाधरस्फुरितेन चलनेन स्वागतप्रणयिनीमिव साध्वागता स्वामिव इति वदन्तीमिव। पुनः कथंभूताम्। नीवीनिवेशोल्लासेन स्त्रीकटीवस्त्रबन्धनं नीवी तस्या निवेशः स्थानं तस्योल्लासेन उन्नमनेन विहितासनप्रदानामिव मण्डितासन्दीवितरणामिव। पुनः कथंभूताम्। कर्णकण्डूविनो-

ततस्तच्छयनतले दक्षिणतःससंबाधमुपविश्य तस्यास्तैस्तेन तेनार्धोक्तिसुभगेन मुग्धविदग्धभाषितेन मनागपरिसमाप्तव्यापारेण स्निग्धमधुरावलोकितेन ईषन्निषेधार्पणरसिकेन समालिङ्गितेनान्यैश्च तैस्तैरनङ्गनटरहस्योपदेशप्रगल्भवृत्तिभिर्विलासैस्तत्र तत्रावस्थान्तरं मुखस्रोतसि विजृम्भमाणमनःकलहंसः, वसन्त इव दक्षिणाशाप्रवृत्तमारुतः प्रवितर्क्य मनसिजरसो-

---

श्रमः स्वेदः कृतार्थागम सफलोऽभवत् बभूव । यस्मात् । कामधेनुसमागमादिव च दिव्यगवीप्राप्त्या इव । समुच्चयालंकारः ॥

ततस्तदनन्तरं तच्छयनतले यच्च सुन्दरोपरि महादेवीपल्यङ्कोपरि निद्रामिव स्वापमिव अहं अकरव चकार । किं कृत्वा पूर्वम् । दक्षिणतः अमृतमतिमहादेव्या अपसव्यपार्श्वेन ससंबाधं शरीरसंघट्टसहितं यथा भवत्येवं उपविश्य स्थित्वा । ततस्तदनन्तरं तस्या अमृतमतिमहादेव्यास्तेन तेन कामिजनप्रसिद्धेन मुग्धविदग्धभाषितेन मुग्धं कोमलं अविज्ञातयथावस्तुस्वरूपं वा विदग्धं चतुरं यद्भाषितं वचनं तेन कृत्वा । तत्र तत्र तस्मिन् तस्मिन् अवस्थान्तरम् । कथंभूतोऽहम् । मुखस्रोतसि मुखप्रवाहे विजृम्भमाणमनःकलहंसः प्रसरन्मनोराजहंसः । कथंभूतेन मुग्धविदग्धभाषितेन । अर्धोक्तिसुभगेन अर्धया उक्त्या मनोहरेण । न केवलं मुग्धविदग्धभाषितेन, अपि तु स्निग्धमधुरावलोकितेन स्निग्धं स्नेहसहितं मधुरं अमृतधारासमं अवलोकितं विलोकितं तेन । कथंभूतेन स्निग्धमधुरावलोकितेन । मनाक् ईषत् अपरिसमाप्तव्यापारेण अर्धविलोकितेन । न केवलं स्निग्धमधुरावलोकितेन, अपि तु समालिङ्गितेन च सम्यगाश्लेषणेन च । कथंभूतेन समालिङ्गितेन । ईषन्निषेधार्पणरसिकेन किंचिन्निषेधनं अङ्गार्पणं ताभ्यां रसिकेन सरसेन । न केवलं भाषितावलोकितसमालिङ्गितैः । अन्यैश्च अपरैश्च तैस्तैर्विदग्धकामुकजनप्रसिद्धैर्विलासैः विब्बोकैः । कथंभूतैर्विलासैः । अनङ्गनटरहस्योपदेशप्रगल्भवृत्तिभिः अनङ्गः स एव नटः नानानृत्यकारकत्वात् तस्य रहस्यस्योपदेशः कामगोप्यतत्त्वशिक्षोपदेशः तस्य प्रगल्भा प्रौढतरा वृत्तिः प्रवृत्तिर्येषु विलासेषु ते तथा तैः । पुनः कथंभूतोऽहं निद्रामकरवम् । दक्षिणाशाप्रवृत्तमारुतः पिङ्गलाया नाड्यां प्रवर्तमानस्वासोच्छ्वासवायुः । अहं क इव । वसन्त इव यथा वसन्तः दक्षिणाशाप्रवृत्तमारुतो भवति अपाचीप्रवर्तमानपवनो भवति । तथा चोक्तं स्वरोदयशास्त्रे—'दक्षिणास्थोऽनिलः श्रेयान्कामसंग्रामयोर्नृणाम् । क्रियास्वन्यास्वन्यः स्याद्वामनाडीप्रभञ्जनः ॥' किं कृत्वा पूर्वम् । स्मरमन्दिरप्रासादं प्रवितर्क्य । स्मरमन्दिरं हृदये कृत्वा इति भावः । केन कृत्वा । स्मरमन्दिरप्रासादं वितर्क्य । लोचनद्वयेन । कथंभूतेन । तरलतारोदयेन तरलश्चपलः तारः उज्ज्वलः उदयो यस्य लोचनद्वयस्य तत्तथोक्तं तेन । कस्मात्तरलत्वं लोचनद्वयस्येत्यह—उत्प्रेक्षते—मनसिजरसोल्लासादिव मनसिजः कन्दर्पः तस्य रसो रागजलं तस्योल्लासादिव उद्गमनादिव । यथा जलोल्लासेन

इव मृणालखण्डनेन, कुरङ्ग इव मृगीशृङ्गविलेखनेन, वनपादप इव लतावेष्टनेन, सिंह इव मेखलाधिरोहणेन, पुष्पाकर इव पिकवधूकूजितेन, उद्यावदिनपल्लव इव पूर्णकुम्भाश्रयणेन, करभ इव विटपाकर्षणेन, सरित्पतिरिवापगावर्तपरिवर्तकलनेन, मकर इव कल्लोलताडनेन, वनगज इव कमलिनीसरःपरिमलेन, द्रवन्निव विलीनयन्निव निमज्जन्निव विशन्निव निर्वापयन्निव च, तैस्तैरनन्यजन्मनो रसप्रसरैः प्रणयकोपसंवर्धितानुराग-

---

शास्त्रस्य मूलसूत्रविवरण वृत्तिग्रन्थेन भवति । पुनश्च किं कृत्वा निद्रामकरवम् । तया अमृतमतिमहादेव्या सह सर्वेशसुख सुरतसौख्यं अनुभूय भुक्त्वा । केन कृत्वा । पुनः मकरन्दपानेन अधरग्रहणेन सुरतसुखमनुभूय । क इव । द्विरेफ इव यथा द्विरेफो भ्रमरः पुष्परसपानेन सुखमनुभवति । पुन. केन कृत्वा । मृणालखण्डनेन अधरखण्डनेन । क इव । राजहस इव यथा राजहस. कलहसः मृणालखण्डनेन सुखमनुभवति । पुन. केन कृत्वा । मृगीशृङ्गविलेखनेन····· ··· । क इव । कुरङ्ग इव यथा कुरङ्गः · ··· · ··· · ·· ·· ·· ·· ···· । पुनः केन कृत्वा । लतावेष्टनेन बाहालिङ्गनेन । क इव । वनपादप इव यथा वनपादपो वल्लीवेष्टनेन सुखमनुभवति । पुन. केन कृत्वा । मेखलाधिरोहणेन · ···· · ·· · । क इव । सिंह इव यथा सिंहः ··················· । पुनः केन कृत्वा । पिकवधूकूजितेन [कोकिलजाया]क्वणितेन कृत्वा । क इव । पुष्पाकर इव यथा पुष्पाकरो वसन्तः पिकवधूकूजितेन सुखमनुभवति । पुनः केन कृत्वा । पूर्णकुम्भाश्रयणेन स्तनपरामर्शेन । क इव । उद्यावदिनपल्लव इव यथा उद्यावदिनपल्लव उत्सवदिवसप्रवालः पूर्णकुम्भाश्रयणेन सुखमनुभवति । पुन. केन कृत्वा । विटपाकर्षणेन ताडनेन । क इव । करभ इव यथा करभ. क्रमेलकः विटपाकर्षणेन कटप्राकर्षेण सुखमनुभवति । पुन. केन कृत्वा । आपगावर्तपरिवर्तकलनेन नाभिप्रदेशावलोकनेन । क इव । सरित्पतिरिव यथा सरित्पतिः समुद्र आपगानां नदीनां आवर्तपरिवर्तकलनेन भ्रमरधारणेन सुखमनुभवति । पुन. केन कृत्वा । कल्लोलताडनेन दोर्दण्डताडनेन । क इव । मकर इव यथा मकरो नक्र· समुद्रकल्लोलताडनेन सुखमनुभवति । पुन. केन कृत्वा । कमलिनीसर·परिमलेन स्मरमन्दिरसुरतकरणेन । क इव । वनगज इव यथा वनगज. विन्ध्यकुञ्जर. कमलिनीसरःपरिमलेन पद्मिनीसंयुक्तसरोवरनिमज्जनेन सुखमनुभवति । ध्वनिरयमलंकारः । तथा चोक्तम्—'अन्यार्थवाचकैर्यत्र पदैरन्यार्थ उच्यते । सोऽलंकारो ध्वनिर्ज्ञेयो वक्तुराशयसूचनात् ॥' अहं किं कुर्वन् । द्रवन्निव क्षरन्निव । विलीनयन्निव तन्मयीभवन्निव । निमज्जन्निव तन्मध्ये प्रवेशं कुर्वन्निव । विशन्निव ········ । निर्वापयन्निव च निर्वाणसुखमात्मनः प्रापयन्निव । क्रियासमुच्चयालंकारः । कथंभूत संवेशसुखम् । तैस्तै. प्रसिद्धैरनन्यजन्मनः कामस्य रसप्रसरै रसप्रवाहै· प्रणयकोपसंवर्धितानुरा-

चक्षुषि लाक्षारागः कज्जलमधरे च मण्डनं कुरुते।
दिग्वाससं इव चित्रा वृत्तिर्मदनस्य विपरीता॥
रमयति मनो नितान्तं स्वेदोद्गमबिन्दुमञ्जरीजालम्।
लज्जित इव कुचमध्ये प्रविशति हारः पुरंध्रीणाम्॥
उरसि नखक्षतपङ्क्तिर्वनितानां भाति सरसविनिवेशा।
स्मरशरशल्यविनिर्गमजनितः प्रायेण मार्ग इव॥
स्तनगलकपोलभुजगा राजन्ते करजराजयः कुटिलाः।
मदनस्य युवतिवसतिषु निवासलिखिता प्रशस्तिरिव॥

---

पल्लवोल्लास. दग्ध. किल रुद्रेण भस्मीकृतः पश्चात् प्ररूढः प्रादुर्भूतः मन्मथतरो कामवृक्षस्य अय प्रवालोल्लासो वर्तते। अपह्नुतिरयमलंकारः॥

**चक्षुषीत्यादि**। चक्षुषि लोचने लाक्षाराग अलक्तको मण्डन कुरुते शोभा विदधाति। अधरे च दन्तवाससि कज्जल मण्डन कुरुते। मदनस्य वृत्तिः यथेष्टित चित्रा आश्चर्यकारिणी। कस्मादाश्चर्यकारिणी तद्धेतुगर्भित विशेषणमाह—कथभूता वृत्ति.। विपरीता विपर्यस्ता। कथ विपरीता। चक्षुषि कज्जल विलोक्यते तत्तु अधरे, अधरे लाक्षारसो विलोक्यते स तु चक्षुषि, यतो वर्तते तेन कारणेन विपरीता वृत्ति'। कस्येव। दिग्वाससः इव दिगम्बरस्येव। यथा दिग्वाससः ध्यानयोगेन चक्षुषि रक्तत्व भवति, अधरे तु तृषायोगात् कृष्णत्व भवति। इत्यनेन किं सूचित भवति। पुरुषेण स्त्रीलोचन चुम्बितम्, तत्र लाक्षारसस्ताम्बूलरसो वा लग्न, लोचनस्य कज्जल तु पुरुषस्य अधरे लग्नम्। दीपकोपमाहेत्वलंकार॥

**रमयतीत्यादि**। पुरंध्रीणा स्वेदोद्गमबिन्दुमञ्जरीजाल प्रस्वेदबिन्दुवल्लरीसमूहो नितान्त मनो रमयति। हारस्तु कुचयोर्मध्ये प्रविशति प्रवेश करोति। हार. कथंभूत। उत्प्रेक्षते—लज्जित इव मन्दाक्ष प्राप्तव इव। रूपकोपमालंकारः॥

**उरसीत्यादि**। वनिताना उरसि नखक्षतपङ्क्ति कामाङ्कुशव्रणराजि' भाति शोभते। कथभूता नखक्षतपङ्क्ति.। सरसविनिवेशा तत्कालदत्ता। पुन' कथभूता। उत्प्रेक्षते—स्मरशरशल्यविनिर्गमनोत्पादितः प्रायेण मार्ग इव भाति। उत्प्रेक्षादीपकालंकारः॥

**स्तनगलेत्यादि**। स्तनगलकपोलभुजगा. स्तनयो' कुचयोर्गले ग्रीवायां कपोलयोर्गण्डस्थलयो भुजयोर्बाहुवल्लयो गच्छन्ति तिष्ठन्तीति स्तनगलकपोलभुजगा एवंविधाः करजराजयः नखक्षतपङ्क्तयो राजन्ते। कथभूता. करजराजयः। कुटिला वक्रा'। पुनः कथभूता। मदनस्य सबन्धिनीषु युवतिवसतिषु युवतिप्रासादेषु निवासलिखिता उत्कीर्णा

किं च।

मनसिजकलभोऽयं नूनमस्मिन्प्रदेशे
　निवसति वनितानामूरुमूलप्रचारः।
यदिह तनुजराजिव्याजतो नाभिवाप्यां
　प्रसृतवपुरिवास्यालक्ष्यते हस्त एषः॥

इति भगवतः कुसुमशरस्य चरितचिन्तासंतानस्तिमितान्तःकरणः स्तोकोन्मेषस्फुरितलोचनपर्यन्तो निद्रामिवाहमकरवम्।

महादेवी तु मां स्वभावसुप्तमिवालक्ष्य, निभृतमाक्षिप्य मत्कण्ठदेशादुपधानीकृतं करम्, अवेक्ष्य मुहुर्मुहुराकुलाकुलविलोचना मदीयाननम्, उत्सृज्य शनैःशनैः शयनम्, उपविश्यायार्धमुहूर्तमात्रं बहिरन्तश्चाटनचापलत्वम्, अनुवितर्क्य निःसंचारतया शून्यतावन्ध्यमिव राजभवनमध्यम्, अ-

---

किं च विशेषमाह—मनसिजकलभ इत्यादि। अयं मनसिजकलभः कन्दर्पचित्रगजः। गजबालक इत्यर्थः। नूनं निश्चयेन अस्मिन् प्रदेशे वनितानां स्मरमन्दिरप्रदेशे निवसति निवासं करोति। कथंभूतो मनसिजकलभः। ऊरुमूलप्रचारः ऊर्वोः सक्थ्नोः मूले प्रचारः प्रवर्तनं यस्य स तथोक्तः। अत्र निवसतीति कथं ज्ञायते। यत् यस्मात् कारणात् इह अस्मिन् प्रदेशे तनुजराजिव्याजतः रोमावलीमिषेण अस्य मनसिजकलभस्य एष प्रत्यक्षीभूतो हस्तः शुण्डादण्डः आलक्ष्यते दृश्यते। कथंभूतो हस्तः। नाभिवाप्यां नाभिदीर्घिकायां प्रसृतवपुरिव दृश्यते प्रसृतं दैर्घ्यमागतं वपुः शरीरं यस्य हस्तस्य प्रसृतवपुः। वर्तमानालंकारः॥

कथंभूतोऽहं निद्रामकरवम्। स्तोकोन्मेषस्फुरितलोचनपर्यन्तः स्तोक ईषदुन्मेषो मनाग्लोचनोद्घाटनं तेन स्फुरितः तेजसा व्याप्तः लोचनयोः पर्यन्तो प्रान्तो यस्य मम स तथोक्तः।

हे मारदत्त महाराज, महादेवी तु पट्टमहिषी तु आशु शीघ्रं प्रस्थितवती चलिता। किं कृत्वा पूर्वम्। मां यशोधरं स्वभावसुप्तमिव आलक्ष्य दृष्ट्वा। पुनः किं कृत्वा। करं बाहुं मत्कण्ठदेशात् निभृतं शनैः आक्षिप्य आकृष्य। कथंभूतं करम्। उपधानीकृतं मया गण्डकीकृतम्। उच्छीर्षकीकृतमिति यावत्। पुनः किं कृत्वा। आकुलविलोचना सती अतिव्याकुलविलोचना सती मुहुर्मुहुर्वारं वारं मदीयं मम आननं मुखं अवेक्ष्य दृष्ट्वा। पुनः किं कृत्वा। शनैः शनैः शयनं पल्यङ्कं उत्सृज्य परिहृत्य। पुनः किं कृत्वा। बहिर्मार्गे अन्तश्च मनसि अटनचापल्यं अर्धमुहूर्तमात्रं क्षणार्धं उपविधाय कृत्वा। पुनः किं कृत्वा। राजभवनमध्यं अनुवितर्क्य निःसंचारतया कस्यापि अप्रवेशतया शून्यतावन्ध्यमिव

जनोचिताचरणेव लघुतरमुच्चलिता। तदलमत्र चित्तभ्रमकारिणा विचारचक्रेण। अवलोकयेयमहमेवास्यास्तावदाकूतपरिपाकम्।' इत्यवसितचेतसा, सोत्तालं विहितनिजनिकटवर्तिखङ्गवहवेषेण गवेषयता च तत्पदवीम्, राजमन्दिरस्य प्रथमकक्ष्यायां दक्षिणस्यां दिशि युवराजविनोदहस्तिनो विजयमकरध्वजनामधेयस्यापाश्रयाविदूरवर्तिनि कटङ्करकुटीरके करिकवलावशिष्टयवसप्रस्तरविस्तारिण्यवगुण्ठितरज्जुपुञ्जपरिकल्पितशिरस्पदे निद्रायन्तम्, इभाभ्यक्तकर्पटपिहितलज्जास्थानम्, अतिकठिनकचकण्टकोड्डमरमुण्डमण्डलम्, अनवानुपदीनापटलसमश्रवसम्, उत्तानकपिकराभोगनिभललाटम्, अङ्गारलिखितकरेखासमानभ्रूकम्, उदञ्चनशुषिरातिशायिलोचनम्,

---

यस्मात् कारणात् अस्या प्रत्यक्षीभूताया अर्धगन्धर्वेस्यायां मनागपि समामनिर्गायवेल्मया निशि एकाकिनी एकिका असतीजनोचिताचरणेव पुंश्चलीलोकयोग्यचेष्टितेन लघुतर उच्चलिता उच्चाल प्रस्थिता। तत्तस्मात् कारणात् अत्र विचारचक्रेण अल पूर्णम्। कथंभूतेन विचारचक्रेण। चित्तभ्रमकारिणा हृदयसंदेहविधायकेन। अवलोकयेय विलोकयामि अहमेव स्वयमेव तावत् पश्यामि। किं विलोकयेयम्। अस्या महादेव्या आकूतपरिपाक अभिप्रायावगानम्। अन्यकथित नाहं मानयामीत्यर्थ। किं कुर्वता मया लेनिकापमद अट्टयञ्जनमनुनयन्ती दृष्टा। सोत्तालमुत्सुकतया विहितनिजनिकटवर्तिखङ्गवहवेषेण तत्पदवीं गवेषयता तस्या मार्गं अन्वेषयता विहितो निजनिकटवर्तिखङ्गवहवेषेण अङ्गरक्षकवेषेण तत्पदवीमन्वेषयता। किं कुर्वन्तमट्टवद्दम्। कटङ्करकुटीरके निद्रायन्त गृहशालाकुञ्चितकुक्ष्या स्वपन्तम्। कथंभूते कटङ्करकुटीरके। प्रथमकक्ष्यायां राजमन्दिरस्य प्रकोष्ठके दक्षिणस्या दिशि मन्दिरात् अवाग्ककुभि विजयमकरध्वजनामधेयस्य युवराजविनोदहस्तिन यशोमतिकुमारक्रीडागजस्य अपाश्रयाविदूरवर्तिनि राज्यस्थानात् निकटवर्तिनि ईदृशे कुटीरके। पुन कथंभूते। करिकवलावशिष्टयवसप्रस्तरविस्तारिणि करिण कवलो ग्रासस्तस्मादवशिष्ट उर्वरित यवसं घासस्तस्य प्रस्तर आस्तरण विस्तरते विद्यते यत्र तत्तथोक्त तस्मिन्। पुन कथंभूते। अवगुण्ठितरज्जुपुञ्जपरिकल्पितशिरस्पदे अवगुण्ठित. कुण्डलीकृत. योऽसौ रज्जुपुञ्ज रज्जुसमूहस्तेन परिकल्पित शिरस्पद उच्छीर्षं यत्र तत्तथोक्त तस्मिन्। कथंभूत अट्टवद्दम्। इभाभ्यक्तकर्पटपिहितलज्जास्थानं इभानां हस्तीना अभ्यक्तकर्पटेन तैलक्षणवस्त्रेण पिहित लज्जास्थान कोशो येन स तथा तम्। पुन कथंभूतम्। अतिकठिनकचकण्टकोड्डमरमुण्डमण्डलम् अतिकठिना भृशं कर्कशा ये कचकण्टकास्तैरुड्डमर भयानक मुण्डमण्डल यस्य स तथोक्तस्तम्। पुन॰ कथंभूतम्। अनवा जीर्णा या अनुपदीना उपानत् तस्या. पटलसमे चर्मसदृशे श्रवसी कर्णौ यस्य स तथा तम्। पुन कथंभूतम्। उत्तानकपिकराभोगनिभललाटम् उत्तान स्फुटतटतलो योऽसौ कपिकरस्तस्याभोगो विस्तारस्तेन-

नोरुकम्, अतनुकूर्मकर्परप्रतिष्ठाष्ठीवत्प्रदेशम्, उच्छूनसिराग्रन्थिजटिलपिण्डिकम्, उन्निर्गतोत्कटघुण्टिकाकीकसम, अनेकविपादिकाविलविरलवक्राङ्गुलिफटत्कपाटम्, अघसंघातमिव दुर्निरीक्ष्यम्, अमङ्गलस्थानमिव नितरामुद्वेजनीयम्, अखण्डमण्डूरकुलमिव मनुष्यरूपेण परिणतम्, अखिलमिव वैरूप्यमवचित्य वेधसा निष्पादितम्, अतिस्थूलश्वासस्फूर्जत्कुक्षिपरिसरम्, उद्घोपणघोरणघोपघर्घरितदिग्विवरम्, उद्दृप्तनिद्राभरव्यादीर्णवदनकन्दरम्, उपलसंपुटनिष्पीडितमिव खर्वेतरपूर्वभागम्, उभयतः परिकृष्ट-

---

स्थाणू कीलकौ तयोर्गणना उपमा ऊर्वो. मरुश्रोर्यस्य स तथा तम्। पुनः कथभूतम्। अतनुकूर्मकर्परप्रतिष्ठाष्ठीवत्प्रदेशम् अतनुर्महान् कूर्मस्य कच्छपस्य कर्परप्रतिष्ठौ खर्परसदृशौ अष्ठीवतोर्जानुनोः प्रदेशौ स्थानके यस्य स तथा तम्। पुनः कथंभूतम। उच्छूनसिराग्रन्थिजटिलपिण्डिकम् उच्छूना श्वयथु प्राप्ता ये सिराग्रन्थयस्तासा जालानि तैर्जटिले सर्वत्रव्याप्ते पिण्टिके जङ्घे यस्य स तथा तम्। पुनः कथंभूतम्। उन्निर्गतोत्कटघुण्टिकाकीकसम् उन्निर्गते ऊर्ध्वं प्रकटिते उत्कटे उद्रिक्ते उल्बणे घुण्टिकयोर्गुल्फयोः कीकसे द्वे हड्डे यस्य स तथा तम। पुनः कथंभूतम्। अनेकविपादिकाविलविरलवक्राङ्गुलिफटत्कपाटम् अनेकाभिर्बह्वीभि. विपादिकाभिर्विचर्चिकाभि' पादस्फोटैराविलौ व्याप्तौ विरलवक्राङ्गुली विरला अश्लिष्टा वक्रा अङ्गुल्यो ययोस्तौ विरलवक्राङ्गुली ईदृग्विधौ फटत्कपाटौ स्फुटितौ चरणौ यस्य स त तथोक्तम्। पुनः कथभूतम्। दुर्निरीक्ष्य दुःखेन महता कष्टेन निरीक्षितु द्रष्टु शक्यो दुर्निरीक्ष्यस्तम्। दुर्दर्शमित्यर्थः। कमिव। अघसघातमिव पापसमूहमिव। पुनः कथभूतम्। नितरामतिशयेन उद्वेजयति उद्वेगमुत्पादयतीति उद्वेजनीयस्तम्। 'कृत्यल्युटो बहुलम्' इति वचनात् कर्तर्यनीयः। किमिव। अमङ्गलस्थानमिव। श्मशानमिवेत्यर्थः। पुनः कथभूतम। अखण्ड अशकल यन्मण्डूरकुलं लोहमलराशि. मनुष्यरूपेण परिणतमिव पर्यायमागतमिव। पुनः कथंभूतम्। अखिल पर्याप्त वैरूप्यं कुत्सितरूपतां अवचित्य गृहीत्वा वेधसा पूर्वजन्मपापकर्मणा निष्पादितमिव निर्मितमिव। पुन॰ कथंभूतम्। अतिस्थूलश्वासस्फूर्जत्कुक्षिपरिसरम अतिस्थूलश्वासैः वृहद्भिः श्वासैः स्फूर्जन् अप्रतिहतव्यापारः कुक्षिपरिसरः उदयपर्यन्तभूमिप्रदेशो यस्य स तथोक्तस्तम्। पुन. कथभूतम्। उद्घोपणघोरणघोपघर्घरितदिग्विवरम् उद्घोपणायाः उत्पटितनासिकाया ये घोरणघोषाः निद्राशब्दास्तैर्घर्घरितानि बधिरितानि जर्जरितानि दिग्विवराणि येन स तथा तम्। पुनः कथभूतम्। उद्दृप्तनिद्राभरव्यादीर्णवदनकन्दरम् उद्दृप्तो दर्पं गतः उन्मादं प्राप्तो योऽसौ निद्राभरः प्रमीलाविपयस्तेन व्यादीर्णा विदारिता वदनकन्दरा मुखगुहा यस्य स तथोक्तस्तम्। पुनः कथंभूतम्। खर्वेतरपूर्वभागम् खर्वेतरो ह्रस्वः पूर्वकायो(भागो) यस्य स तथा तम्। उत्प्रेक्षते—

न्यमपराधम् । आकर्णय तावत् । एषालि तव दासी । धृतौ च ते मया पादौ । इयं च वासनेयी मम कुशलेन मा विभाङ्क्षीत्, यद्यहमात्मवशेनैव स्थितवती । किं तु हतविधिनाहं मन्दभागवती परवती विहिता । स च नपनः क्षणमपि दुष्टग्रह इवागत्य न मां मुञ्चति । तत्किं नु खलु करोमि । नन्वहं हताशा । बलीयश्च मे निर्भागिन्याः पुराकृतं दुष्कृतम्, येन त्वयि न शक्नोमि जीवितेशमनोनुरागवदनेन सुधागलल्लावण्यकेन कायेन सदा संनिधातुम् । तत्समागमसमये च यदि त्वामेव हृदये निधाय तेन सह नासे, तदास्यामेव निशि भगवती कात्यायनी मां खादतु । पृथिव्येनसां च भागिनी स्याम् । तत्प्रसीद । एष ते पादपतनं

---

पराधम् । अनुचितसंबन्धम् । अयुक्तमित्यर्थः । आकर्णय तावत् शृणु अनुक्रमेण । एषा अहं प्रत्यक्षीभूता तव भवने दासी कर्मकरी । अस्मिन् समये धृतौ च मया ते तव पादौ । तव पादयोः शपथं करोमीत्यर्थः । इयं च प्रत्यक्षीभूता वासनेयी गर्त्री मम कुशलेन क्षेमेण मा विभाङ्क्षीत् मैव गमत्, यदि अहं आत्मवशेनैव स्वाधीनतया स्थितवती उच्छृङ्(?)खलवती । किं तु हतविधिना निन्दितेन कृतेन वा अभाग्या परवती विहिता पराधीनतां स्थितवती । कथंभूताहम् । मन्दभागवती मन्दपुण्या । न च नयनः कामः क्षणमपि मुहूर्तमपि दुष्टग्रह इव पिशाच इव आगत्य मां न मुञ्चति । तवाभिलाषोर्पणबाद विशतीत्यर्थः । नु इति प्रश्ने । तत्तस्मात् कारणात् । खलु अनुनये वाक्यालंकारे वा । अहं किं करोमि मम को दोषः । विधेरेव दोष इत्यर्थः । नन्वहं हताशा निष्पन्नमनोरथा संजाता । उक्तं च—

'वाक्यालंकारजिज्ञासा जिज्ञासानुनयेऽपि च । निषेधे खलुशब्दोऽयं विद्वद्भिरिह कथ्यते ॥
नन्वाक्षेपे परिप्रश्ने वाक्यारम्भेऽवधारणे । प्रत्युक्तमदनुज्ञाननिषेधेऽनुनयेऽपि च ॥'

अये प्रियतम, मे मम निर्भागिन्या अपुण्यायाः दुष्कृतं पापं बलीयश्च बलवत्तरं वर्तते । कथंभूतं मे दुष्कृतम् । पुराकृतं पूर्वजन्मोपार्जितम् । येन दुष्कृतेन त्वयि विषये अनेन कायेन सदा सर्वकालं संनिधातुं निकटीभवितुं न शक्नोमि न समर्था भवामि । किंभूतम् । जीवितेशमनोनुरागवत् तव हृदयानुरागवत् । यथा त्वयि जीवितेशे मम मनोनुरागो वर्तते तथा कायेन समीपीभवितुं न शक्नोमीत्यर्थः । कथंभूतेन कायेन । सुधागलल्लावण्यकेन सुधा निरर्थकं निर्गलत्कान्तिकेन । तत्समागमसमये च पयोधरसुरतसमये च त्वामेव भवन्तमेव हृदये निधाय तेन सह पयोधरेण सार्धं यदि अहं नासे न तिष्ठामि, तदा अस्यामेव निशि रात्रौ भगवती परमेश्वरी कात्यायनी चण्डिका माता मां खादतु । पृथिव्येनसां पृथिवीपापानां च भागिनी च संबन्धवती च स्यां भवामि । तत्तस्मात् कारणात् प्रसीद प्रसन्नो भव । एष प्रत्यक्षीभूतस्ते प्रणयदण्डः प्रायश्चित्तकरणं पादपतन-

धरदलः, त्रिपुरदाहप्रवृत्तमतिः पार्वतीपतिरिव भ्रुकुटिभङ्गुरितभालमध्यः, ताप्यमानावगाहः कटाह इव लोहिततरवक्षःस्थलः, तिमिरवीचिकाभिरिवामर्षोत्कलिताभिरन्वीक्रियमाणलोचनस्तद्वधाय कोशादर्घानुरोधमसिमहमाकृष्टवान्। अभवच्च दैवात्तदैव मे प्रदीपप्रबोधादिव मनस्तमस्तनुच्छेदः। आः किमिदमहो कर्माहमनुष्ठातुं व्यवसितः। न खलु नार्य इव शुभमशुभं वा कर्म सहसैवारम्भन्ते विनीतमतयः, नापि विपदि संपदि वा कृपणप्रकृतय इवाशु विक्रियां गच्छन्ति महानुभावाः, न चाल्पमेधसामिव महीयसामुपपन्ना भवन्ति कामचारेण प्रवृत्तयः, न चैतद्गृहनं(णं) किंतु

---

देहो भवति। पुनः कथंभूतोऽहम्। प्रवेपमानाधरदलः प्रवेपमान कम्पमान अधरदलं दन्तच्छदो यस्य स प्रवेपमानाधरदलः। क इव। पल्लव इव। कथंभूतः पल्लव.। छिद्यमानलवः छिद्यमानो द्विधाक्रियमाणो लवो विलासो यस्य सः। यथा पल्लवः भिद्यमानलवः प्रवेपमानदलो भवति। पुन. कथंभूतोऽहम्। भ्रुकुटिभङ्गुरितभालमध्यः भ्रुकुटिना भ्रूभङ्गेन भङ्गुरितो वक्रीकृतो भालमध्यो यस्य स तथा। क इव। पार्वतीपतिरिव रुद्र इव। कथंभूत· पार्वतीपति। त्रिपुरदाहप्रवृत्तमतिः त्रिपुरदाहे दैत्यविशेषस्य भस्मीकरणे प्रवृत्ता व्यापृता मतिर्यस्य स तथा। यथा त्रिपुरदाहप्रवृत्तमती रुद्रो भ्रुकुटिभङ्गुरितभालमध्यो भवति। पुनः कथंभूतोऽहम्। लोहिततरवक्षःस्थल रक्तीभूतहृदयप्रदेश·। क इव। कटाहमि(इ)व लोहभाजनमिव। कथंभूतः कटाह·। ताप्यमानो जाज्वल्यमान· अवगाहो मध्यो यस्य स। ताप्यमानावगाहः कटाहो लोहिततरो भवति। पुन कथंभूतोऽहम्। अमर्षोत्कलिकाभिः क्रोधकल्लोलैरन्वीक्रियमाणलोचनः। कथंभूताभिरमर्षोत्कलिकाभिः। तिमिरवीचिकाभिरिव अन्धकारलहरीभिरिव। हे राजन् श्रीमारदत्तमहाराज, दैवात् कर्मयोगात् तदैव तस्मिन्नेव अस्याकर्षणकाले मे मम मनस्तमस्तनुच्छेदश्च चित्तस्थितक्रोधान्धकारकायच्छेदश्चाभवद्बभूव। कथंभूताद्दैवात्। प्रदीपप्रबोधादिव प्रदीपप्रज्वलनादिव। कथ मनस्तमस्तनुच्छेदो बभूव। तदेव विचिन्तयति—आ सतापे। उक्तं च—'आ. संतापप्रकोपयो.।' अहो आत्मन्, इदं कर्म तद्वधकर्म अहं यशोधरः अनुष्ठातुं कर्तुं व्यवसितः प्रवृत्तः। विनीतमतय· पुरुषा· विद्वांसो जनाः शुभमशुभं वा कर्म सहसैव आरभन्ते तथा विनीतमतयो नारभन्ते इत्यर्थ.। क इव। नार्य इव। महानुभावाः महान्तः पुरुषाः विपदि संपदि च लक्ष्मीसद्भावे आशु शीघ्रं विक्रिया नापि न न गच्छन्ति प्राप्नुवन्ति। क इव। कृपणप्रकृतय इव मूर्खलोका इव। यथा कृपणप्रकृतयो लोका विपदि संपदि च आशु शीघ्रं विक्रिया गच्छन्ति तथा महानुभावा विक्रिया न गच्छन्तीत्यर्थ.। महीयसां गरीयसां अतिमहतां पुरुषाणां कामचारेण प्रवर्तनं विचारेण विमृश्यच्छया प्रवृत्तयश्चेष्टितानि उपपन्ना प्राप्ता न च भवन्ति न संजायन्ते। केषामिव। अल्पमेधसामिव। यथा अल्पमेधसः कामचारेण प्रवर्तन्ते तथा न गरीयांसो प्रवर्तन्ते इत्यर्थः। न चैतद्गृहणं किंतु प्रातः

असंभाषणमासन्नस्य, उपेक्षणं विज्ञपयतः, अवधीरणमसमैः परिभूयमानस्य, आशाभङ्गकरणमर्थयतः, प्रीतिवितरणं तदनभिमतानाम्, असरणं प्रियगोष्ठीषु, अनवेक्षणं तत्परिजनस्य, अपवार्य व्याहरणं स्वप्रकाशेष्वप्यालापेषु, अनवसरानुसरणमसद्भावेष्वपि प्रस्तावेषु क्रियेत, स्यात्प्रत्यानीतश्चिरमस्थाने कृतसमयः प्रणयः। साधितं चाभिमतम्। इदमेव च निश्चित्याविदितवृत्तान्तस्येव [तच्छयनतलमुपगम्य पुरावत्स्थितवतः प्रलयकालकलितप्रसरस्य मकराकरस्येव][1] निर्मर्यादमन्तर्विकल्पकल्लोलदोलायमानमानसस्य, सा निवर्त्यात्मनो दुर्वि-

---

यदि पुनः उपस्थितस्य आगतस्य पुरुषस्य अनवेक्षणमनवलोकनं क्रियेत तर्हि अस्थाने अयोग्यस्थाने कृतसमयः प्रणयः कृतावसरः स्नेहश्चिरं दीर्घकालं प्रत्यानीतो निराकृतः स्यात्। यदि पुनः आसन्नस्य जीवस्य असंभाषणं अवक्तव्यं क्रियेत तदा अस्थाने कृतसमयः विहितावसरः प्रणयः चिरं दीर्घकालं प्रत्यानीतो निराकृतः स्यात्। यदि पुनः विज्ञपयतो विज्ञापनं कुर्वतः पुरुषस्य उपेक्षणं निरादरः क्रियेत तदा अस्थाने कृतसमयः प्रणयश्चिरं प्रत्यानीतः स्यात् मारितेन क्षणमात्रमेव दुःखं स्यात्। तथा असमैः परिभूयमानस्य पुरुषस्य यदि अवधीरणं निराकरणं क्रियेत तदा अस्थाने कृतसमयः प्रणयश्चिरं प्रत्यानीतः स्यात्। तथा अर्थयतो याचमानस्य पुरुषस्य यद्याशाभङ्गकरणं क्रियेत तदा अस्थाने कृतसमयः प्रणयश्चिरं प्रत्यानीतः स्यात् मारणे तु क्षणमात्रदुःखं स्यात्। तथा तदनभिमतानां द्वेषिणां पुरुषाणां यदि प्रीतिवितरणं क्रियेत तदा अस्थाने कृतसमयः प्रणयश्चिरं प्रत्यानीतः स्यात् मरणे कथम्। तथा प्रियगोष्ठीषु असरणं ...... ...... ...... ......... . ......... । तथा तत्परिजनस्य तत्परिवारस्य अनवेक्षणं अवीक्षणं यदि क्रियेत तदा .. . . ........... . ....... ..... । तथा स्वप्रकाशेष्वपि आलापेषु निजायत्तेष्वपि आभाषणेषु यदि पुनरपवार्य व्याहरणं आकार्य प्रस्थापनं क्रियेत इदानीमवसरो नास्ति इति च क्रियेत तदा अस्थाने कृतसमयः प्रणयश्चिरं प्रत्यानीतः स्यात्। तथा असद्भावेष्वपि अनवसरानुसरणं .... .... .. . . ....... ..... .............. . । साधितं च अभिमतं निर्धारितं च कार्यम्। इदमेव च निश्चित्य तया सह संभाषणं न करिष्यामि इति निश्चयं कृत्वा अविदितवृत्तान्तस्येव अविज्ञातदुर्विलसितस्येव तच्छयनतलं महादेवीशय्यां उपगम्य आगत्य पुरावत् स्थितवतो मम भुजपञ्जरं अविर्नीतिवत्सल आश्रित्य च अविदितमाहमेव अविज्ञातदुर्विलसितेव अङ्गनिक्षेपमात्रेणैव शय्यायां शरीरनिक्षेपमात्रेणैव अतिमान्द्यमतिबहुलं सा अमृतमतिमहादेवी न्यद्रासीत् सुष्वाप। कथंभूतस्य मम। निर्मर्यादं अपर्यन्तं अन्तर्विकल्पकल्लोलैरन्तर्मनसि ये विकल्पाश्चित्ताभोगाश्चित्तोन्नतयस्त एव कल्लोला महातरङ्गाः तैर्दोलायमानं कम्पमानं मानस

---

1. एतत्कोष्ठान्तर्गतपाठः सटीकपुस्तके त्रुटितः.

ऽपि न मे मनागपि प्रसीदति मनः। पिशाचच्छलितस्येव शून्यहृदयता, महाशोकतप्तस्येव दीर्घतरमुच्छ्वसितम्, अग्निपतितस्येव परिवर्तनबहुलता, ज्वरितस्येवातीवमुखशोषः, कौसीद्योपहतस्येव मुहुर्मुहुर्विजृम्भणम्, उन्मत्तस्येव यत्किंचित्प्रलपनम्, निषादानुगताङ्गी कुरङ्गीव च न क्वचिदेव पदमावघ्नाति बुद्धिः, मनोऽपि घनदिनमिव बाढमन्धकारयत्याशाम्, आत्मनः क्षणमात्रमुद्योतमानमिव प्रतिभासते, भवति च पुनर्बाष्पजलप्रवाहदुर्दिनम्। अहो महदाश्चर्यम्। इयं हि पुरा स्वैरविहारेष्वपि रममाणा भग्नचरणेव नैकाकिनी पदमेकमपि ददाति, जलक्रीडासु बालमृणालस्पर्शेनापि संदिग्धजीवितेव मूर्छति, कुसुमावचयेष्वशोकदलकल्पितास्वपि शय्यासु शर्करिलदेशपतितेव न सु-

---

दृशं जानतोऽपि मनो न प्रसीदति। तदा तस्य पुरुषस्य इङ्गिताकारगम्या मनसि दुःखं जायते त्रिवर्णरिति(?)शेष। तथा मे मम शून्यहृदयता अचेतन्यहृदयत्वम्। कस्येव। पिशाचच्छलितस्येव ग्रहगृहीतस्येव। तथा मे दीर्घतरमायतं उच्छ्वसितमुच्छ्वासः। कस्येव। महाशोकतप्तस्येव। यथा महाशोकतप्तस्य पुरुषस्य उच्छ्वसितं दीर्घतरं भवति। तथा तेन प्रकारेण मे मम परिवर्तनबहुलता वामदक्षिणपार्श्वपरावर्(वृत्त)नप्राचुर्यम्। कस्येव। अग्निपतितस्येव। यथा अग्निपतितः पुमान् बहुपरिवर्तनं करोति। तथा मे अतीवातिशयेन मुखशोषः। कस्येव। ज्वरितस्येव। यथा ज्वरितः पुमान् मुखशोषवान् भवति। तथा मे मुहुर्मुहुर्विजृम्भणं वारंवारं जृम्भाकरणम्। कस्येव। कौसीद्योपहतस्येव आलस्योपहतस्येव। तथा मे यत्किंचित्प्रलपनं यद्वा तद्वा अनर्थकवचनम्। कस्येव। उन्मत्तस्येव पीतमद्यस्येव। तथा मे बुद्धिर्मतिः क्वचिदेव क्वाप्येव पदं स्थानं नावघ्नाति न रचयति। केव। कुरङ्गीव। कथंभूता कुरङ्गी। यथा कुरङ्गी निषादानुगताङ्गी पृष्ठलग्नव्याधशरीरा क्वचिदपि पदं नावघ्नाति। तथा मे मम मनोऽपि बाढमतिशयेन आशां धनभोगाद्यभिलाषं अन्धकारयति। किमिव। घनदिनमिव। यथा वर्षादिनं आशां दिशं बाढमतिशयेन अन्धकारयति अन्धकारसहिता करोति। तथा मे मम आत्मनः स्वस्य क्षणमात्रं मुहूर्तमपि प्रतिभासते। किमिव। उद्योतमानमिव उद्योतं कुर्वदिव। तथा मे मनः पुनर्बाष्पजलप्रवाहदुर्दिनं भवति अश्रुजलपूर्णं इव संजायते। अहो राजन्। इति हृदयं पर्यालोच्य सम्यग्विचार्य अखिलजनावसरसभामण्डप अखिलजनावसरनामधेय सभाजनाश्रयमुपागतोऽस्मि संप्राप्तः। इति पर्यालोच्य। इत्याह किम्। अहो महदाश्चर्यम् अहो गुरुतरमाश्चर्यमिदम्। इयं अनुत्तममतिर्महादेवी हि निश्चयेन पुरा पूर्वं स्वैरविहारेषु अपि वनक्रीडादिषु रममाणा सती भग्नचरणेव भग्नपादेव एकाकिनी एकमपि पदं एकपदन्यासस्थानमपि न ददाति। इयं महादेवी जलक्रीडासु बालमृणालस्पर्शेनापि कोमलपद्मिनीकन्दस्पर्शेनापि संदिग्धजीवितेव मूर्छति मृतेव मूर्छां प्राप्नोति। इयं कुसुमावचयेषु चुम्बनेषु अशोकदलकल्पितास्वपि अशोकदलविरचितास्वपि शय्यासु शयनीयेषु शर्करिलदेशपतितेव कर्करसहितप्रदे-

मलीमसाः प्रवृत्तयः । तथा हि—नावेक्षितो ममात्मनश्च कुलस्य परिवादः, न गणितो मे मनागप्यात्मन्यसाधारणः प्रणयः, नावलोकितानि प्रणयकलहेष्वपि मया विदितपरमार्थागमेन कृतान्यनुनयप्रसादनानि, न स्मृतमनुभूतपूर्वमिवाजन्मसंवर्धितं सद्भावमथ सख्यम्, न चिन्तिता सकलजनमान्या स्वस्य पदवी, कथमिव न स्थिता मत्तः परिभवाशङ्का, कथमिव न लज्जितं सपत्नीजनस्य, कथमिव न बीभत्सितमयशःपटहस्य, कथमिव च नावधारितमनन्यजनसुलभविलासानां संपादनम् । यद्यपि च 'स्त्रियः स्वल्पेषु रज्यन्ते दासहस्तिपकादिषु' इति 'अपात्रे रमते नारी' इति वचनमस्ति, तथापि वयोभोगश्चारुवेषिता कलासु विश्रुतत्वं वा पुरुषाणां संगमयन्त्यसंस्तुता अपि वनिताः । न चास्यैतेष्वन्यतमोऽपि गुणः । तत्किं नु खल्वस्याः

---

मलीमसा मलदूषिता भवन्ति संजायन्ते । तथा हि तदेव निरूपयति—नावेक्षितो न विलोकितो मम यशोधरस्य आत्मनश्च स्वस्य महादेव्याः कुलस्य परिवादो निन्दा । न गणितो न विचारितो मे मम मनागपि स्तोकोऽपि आत्मनि महादेव्या असाधारणः प्रणयः सम्मानः स्नेहः । नावलोकितानि न दृष्टानि प्रणयकलहेष्वपि स्नेहक्लेशेष्वपि मया कृतानि अनुष्ठितानि अनुनयप्रसादनानि मानापनयनप्रसन्नीकरणानि । कथंभूतेन मया । विदितपरमार्थागमेन कृतसत्यार्थापगमेन । न स्मृतं न चिन्तितम् । किं न चिन्तितम् । आजन्मसंवर्धितं जन्मपर्यन्तं वृद्धिं नीतं सद्भावमथसख्यस्य सहवाससंबन्धम् । कथंभूतं सद्भावमथसख्यम् । अनुभूतपूर्वमिव पूर्वमनास्वादितमिव । न चिन्तिता न विचारिता सकलजनमान्या सर्वलोकपूज्या स्वस्य पदवी महादेवीत्वपदम् । मत्तः मत्सकाशात् परिभवाशङ्का पराभवभीतिः कथमिव कथं मनसि न स्थिता । सपत्नीजनस्य अन्यस्त्रीलोकस्य अविचिनार्थजनस्य कथमिव कथं न लज्जितं कथं न मीलितम् । अयशःपटहस्य अपकीर्तिध्वनेः कथमिव न बीभत्सितं कथं न जुगुप्सितम् । कथमिव कथं च नावधारितं न स्मृतं अनन्यजनसुलभविलासानां अपरलोकदुर्लभभोगानां संपादनमुत्पादनम् । यद्यपि यदि च स्त्रियः स्वल्पेषु दासहस्तिपकादिषु कर्मकरादिषु रज्यन्ते रागं गच्छन्तीति यस्मात् 'अपात्रे रमते नारी' इति वचनमस्ति यस्मात्, तथापि तदपि वयोभोगो यौवनभोगः कर्पूरकस्तूरीचन्दनादिकः, चारुवेषिता रुचिरवस्त्राभरणादिकम्, कलासु लक्षितविपत्तितादिषु विश्रुतत्वं प्रसिद्धता वा पुरुषाणां संगमयन्ति संगमं कारयन्ति । काः कर्मतापन्नाः संगमयन्ति मेलयन्ति । असंस्तुता अपि वनिता अपरिचिता अपि स्त्रीः संगमयन्ति इति । न चैवं अस्य कुब्जकस्य एतेषु गुणेषु वयोभोगचारुवेषिताकलाविश्रुतत्वादिषु अन्यतमोऽपि गुणो न वर्तते । तत्तर्हि किमर्थं नु इति वितर्कयाम्यहम् । स्विदिति वाक्यालंकारे । अस्या अमृतमतिमहादेव्याः

पेक्षास्ति। प्रत्युत केतक्य इवाशुचिष्वेव वस्तुषु प्रायेण बध्नन्ति प्रीतिम्। उदाहरन्ति च—

'नैता रूपं प्रतीक्षन्ते नासां वयसि संस्थितिः।
विरूपं रूपवन्तं वा पुमानित्येव भुञ्जते॥' इति।

आः पाण्डुरपृष्ठे, त्वदालम्बनैकजीविते हि मयि दुष्कर्मैवमाचरन्ती कथं द्विधा न विदीर्णासि। अहो पर्याप्तं विषयसुखतर्पेण। तदिदानीं किमिमाः परित्यज्य परमाज्ञाफलोपचर्यमैश्वर्यमनुभवामि। तन्न। विना हि विलासिनीजनेनारण्यमिवेदं राज्यम्, मृतकमण्डनमिवाभरणम्, पङ्कोपदेह इव विलेपनम्, सुप्तसंवाहनमिव शरीरसंस्कारः, प्रकरणमिव चामरातपत्राडम्बरः, कालहरणोपाय इव कलानामभ्यासः, तुण्डकण्डूविनयनमिव काव्याध्ययनम्,

---

विशेषेण केतक्य इव तृणराजजातय इव अशुचिष्वेव अमेध्येष्वेव वस्तुषु प्रायेण बहुलतया प्रीतिं बध्नन्ति। केतकीमूलेषु किल विष्ठा यदा भवति तदा केतक्य उद्गच्छन्ति। उदाहरन्ति च विद्वांसः। किमुदाहरन्तीति चेत्। अस्यायमर्थः—एताः स्त्रियो रूपं सुन्दरत्वं न प्रतीक्षन्ते प्रतिपालयन्ति। आसां स्त्रीणां वयसि यौवने संस्थितिः सव्यवस्था न वर्तते। विरूपं रूपहीनं रूपवन्तं वा सुन्दररूपं पुरुषं भुञ्जन्ते अनुभवन्ति। कथम्। इति एतस्मात् कारणात्। इतीति किम्। पुमान् पुरुषलिङ्गवान्। अयं पुमान् वर्तते इति मत्वा भुञ्जत इत्यर्थः। आः कोपे प्रपीडाया वा। हे पाण्डुरपृष्ठे कुलटे हे निर्भागिनि वा, त्वदालम्बनैकजीविते त्वमालम्बनमाधार एकमद्वितीयं जीवितं प्राणितं यस्य मम सोऽहं त्वदालम्बनैकजीवितस्तस्मिन् मयि विषये हि निश्चयेन एवममुना प्रकारेण दुष्कर्म पापमाचरन्ती त्वं कथं केन प्रकारेण द्विधा द्विप्रकारेण न विदीर्णासि न द्विखण्डं जातासि। अहो आश्चर्यम्। पर्याप्तं परिपूर्णं विषयसुखतर्पेण विषयेषु तृष्णया। तत्तस्मात् कारणात् इदानीमधुनैव किं इमाः परित्यज्य स्त्रियः परिहृत्य परमुत्कृष्टं ऐश्वर्यं नापत्यं अनुभवामि भुञ्जेऽहम्। कथंभूतमैश्वर्यम्। आज्ञाफलोपचर्यं आज्ञा विशिष्टैः सेव फलं लाभस्तेन उपचर्यं पूज्यम्। तन्न तदपि नाशु न भवति। हि यस्मात् स्त्रीमुक्त्वा ऐश्वर्यं भुज्यते चेत् विलासिनीजनेन विना स्त्रीजनेन विना इदं राज्यं अरण्यमिव अटवीव वर्तते। स्त्रीजनेन विना आभरणं सुवर्णपरम्परा मृतकमण्डनमिव वर्तते। स्त्रीजनेन विना विलेपनं कर्पूरकस्तूरीचन्दनादीनि पङ्कोपदेह इव कर्दमविलेपनमिव वर्तते। स्त्रीजनेन विना शरीरसंस्कारो देहमण्डनं सुप्तसंवाहनमिव सुप्तस्य निद्रितस्य पादमर्दनमिव वर्तते। स्त्रीजनेन विना चामरातपत्राडम्बरः प्रकीर्णकानामाडम्बरः छत्राणामाटोपः प्रकरणमिव वर्तते क्षेत्रपालादीनां वर्धापनमिव वर्तते। स्त्रीजनेन विना कलानामभ्यासः लिखितपठनाद्यनुशीलनं कालहरणोपाय इव वर्तते वेलातिगमनमिव वर्तते। स्त्रीजनेन विना काव्याध्ययनं तुण्डकण्डूविनयनमिव ············

द्वेषं गच्छन्त्युपेक्षायां प्रीतौ प्रीतिं न तन्वते ।
रोषे तोषे च नारीणां सुखमस्ति न कामिषु ॥
प्रियोपचारसंचारे कुले रूपे वयस्यपि ।
अन्येष्वपि गुणेष्वासामपेक्षास्ति न मृत्युवत् ॥
भ्रूर्धनुर्दृष्टयो बाणास्त्रिशूलं च वलित्रयम् ।
हृदयं कर्तरी यासां ताः कथं नु न चण्डिकाः ॥
स्त्रीषु साक्षाद्विषं दृष्टौ न सर्पेष्विति मे मनः ।
तद्दृष्ट एव लोको हि दृश्यते भस्मतां गतः ॥
एतदेव द्वयं तस्मात्कार्यं स्त्रीषु हितैषिभिः ।
आहारवत्प्रवृत्तिर्वा निवृत्तिरथवापरा ॥

---

यन्तीत्यर्थः । विरहे विप्रलम्भे सति भय कुर्वन्ति । योषितां स्थितिः स्वभावः कश्चिदनिर्वचनीया अपूर्वैव अभिनवैव वर्तते । केषामिव । खलानामिव । यथा खलानां सद्दे सति हृदयस्थितं कथयन्ति विघटिताः सन्तो भयमुत्पादयन्ति । उपमालंकारः ॥

द्वेषमित्यादि । उपेक्षायां निरादरे सति द्वेषमप्रीतिं गच्छन्ति प्राप्नुवन्ति । प्रीतौ स्नेहे सति प्रीतिं न तन्वते स्नेहं न कुर्वन्ति । नारीणां च रोषे तोषे च ············ सति कामिषु कामुकेषु सुखं नास्ति न भवति । जात्यलंकार- ॥

प्रियोपचारेत्यादि । आसां स्त्रीणां प्रियोपचारसंचारे प्रियकरणप्रवेशे अपेक्षा वाञ्छा नास्ति । तथा कुले अपेक्षा नास्ति । तथा रूपे अपेक्षा नास्ति । तथा वयसि यौवने अपेक्षा नास्ति । तथा अन्येष्वपि पक्षादिषु गुणेषु अपेक्षा नास्ति । किंवत् । मृत्युवत् यथा मृत्योर्यमस्य प्रियकरणरूपवयोवनवतादिषु गुणेषु अपेक्षा वाञ्छा न भवति । समुच्चयोपमालंकारः ॥

भ्रूरित्यादि । यासां स्त्रीणां भ्रूर्धनुश्चाप वर्तते, दृष्टयो अवलोकनानि बाणा- शरा- सन्ति, वलित्रयं उदररेखात्रयं त्रिशूलं वर्तते, हृदयं कर्तरी वर्तते, उभयस्तनद्वयसंयोगात् वक्रहृदयत्वात् च । ताः स्त्रियः । नु इति वितर्के प्रश्ने वा । चण्डिका भवान्यः कथं न भवन्ति । अपि नु भवन्त्येव । उपमाक्षेपालंकारः ॥

स्त्रीष्वित्यादि । स्त्रीषु साक्षात् प्रत्यक्षेण निश्चयेन वा दृष्टौ विषं वर्तते, सर्पेषु दृष्टौ विषं न वर्तते, इति ईदृशं मे मम सोमदेवाचार्यस्य मनः संकल्पो वर्तते । तद्दृष्ट एव ताभिः स्त्रीभिर्दृष्टोऽवलोकितो लोको जनो भस्मतां गतः दृश्यते अवलोक्यते । ननु सर्पैर्दृष्टो भस्मतां गतो दृश्यते । उत्प्रेक्षानुमानालंकारः ॥

एतदेवेत्यादि । हितैषिभिः मोक्षार्थिभिः पुरुषैः एतदेवेदमेव द्वयं तस्मात् कार-

एव भवन्ति कारणमनर्थपरम्परायाः, हसन्त्य एव शल्ययन्त्यङ्गानि, पश्यन्त्य एव दहन्ति देहम्, आलपन्त्य एव स्खलन्ति मनसः स्थैर्यम्, आसजन्त्य एव कुर्वन्ति तृणादपि लघुतरं मनुष्यम्, आरक्ष्यमाणाः स्वच्छन्दैनैवारभन्ते दुष्कर्माणि। न चासामस्ति रक्षणोपायः। तथा हि—अनुश्रवः कृतरक्षाशल्याप्यहल्या किलाखण्डलेन सह संविवेश, हरदेहार्धाश्रितापि गिरिसुता गजासुरेण, यमजठरालयापि छाया पावकेन, एकवसनवैदेहकवधूर्मूलदेवेन, एवमन्याश्चोपाध्यायिकाप्रभृतयो निजपतिसमक्षमुपपतिभिः सहारेभिरे महा-

अपविघ्नं मानयन्तीत्यर्थः। अनुरज्यन्त्य एव स्नेहं कुर्वन्त्य एव अनर्थपरम्परायाः कारणं हेतुः भवन्ति। हसन्त्य एव पुरुषस्य अङ्गानि शरीराणि शल्ययन्ति। पश्यन्त्य एव पुरुषस्य देहं दहन्ति भस्मीकुर्वन्ति। आलपन्त्य एव भाषमाणा मनसः चित्तस्य स्थैर्यं स्खलन्ति विनाशयन्ति। आसजन्त्य एव सङ्गं कुर्वन्त्य एव मनुष्यं मानवं तृणादपि रोदादपि लघुतरं अगुरुं कुर्वन्ति। आरक्ष्यमाणाः प्रतिपाल्यमानाः स्वच्छन्देन निजकापटेन दुष्कर्माणि जारगमनलक्षणानि पापानि आरभन्ते मण्डयन्ति। न च नैव आसां स्त्रीणां रक्षणोपायोऽस्ति न विद्यते। तथा हि। तदेव निरूपयति—अनुश्रवः लौकिकी श्रुतिर्वर्तते कृतरक्षाशल्यापि कृतं रक्षाशल्यं रक्षाकण्टको यस्याः सा कृतरक्षाशल्या अहल्या गौतमभार्या। किलेति लोकोक्तौ। आखण्डलेन इन्द्रेण सह संविवेश मैथुनं चकार। एवं किल श्रूयते—गौतमकौशिकयोः सहातीव तपस्यतः तपःप्रभावप्रीतः प्रजापतिरहल्यां मानसीं कामसुतामेकस्मै नाम परस्मै चन्द्रत्वं दातुमिच्छन्नार्गाद्बभूव। तत्र कौशिकः ऐश्वर्ये सति सर्वे विभवा इति विचिन्त्य इन्द्रपदं गृहीत्वा तया सह रेमे। गौतमशापाच्च भगाङ्कितवपुर्बभूव। हरदेहार्धाश्रितापि हरस्य देहस्य अर्धमाश्रितापि सती गिरिसुता पार्वती गजासुरेण सह संविवेश क्रीडां चकार। तथा हि गिरिसुता हिमगिरिसुता गौरी गजरूपधारिणं हरं करेणुतया कुर्वन्ती भवन्ती स्वेच्छया कृतविहारा गजासुरेण सह रेमे। तद्दोषेण किल हरेण स गजासुरो मारित इति। यमजठरालयापि छाया पावकेन सह संविवेश इत्येवम्। तथा हि वत्सगोत्रजन्मा आक्रमनिस्तीर्णयात्रां चिकीर्षुरयं यमो धर्मराज इति मत्वा उपारूढयौवना छाया नाम कन्यका तस्मै स रक्षणार्थं समर्पयामास। सोऽपि यमस्तां छायां स्वकीयजठरे स्थापितवान्। एकदा तु तां छायां शरवणे निधाय मानसे सरसि स्नातुं गते यमे सा छाया पावकेन सह संविवेश। एकवसनवैदेहकवधूर्मूलदेवेन। तथा हि अयोध्यायां एकशाटो नाम वणिक् सर्वत्र अविश्वासी निजभार्यारक्षणार्थं पत्न्या सह एकवस्त्रं पिदधौ। शशिमूलदेवश्च तां वार्तामाकर्ण्यागत्य च तत्र कचवलयपरिधानव्याजेन कृतसंकेतदेवे वर्षति निशीथिन्यां सप्ततलप्रासादाप्रवासभवनवर्तिनीमपि तत्पत्नीमुपजह्रुः। एवमन्याश्च अपराश्च स्त्रियः उपाध्यायिकाप्रभृतयः निजपतिसमक्षं उपपतिभिः सह जारैः सार्धं महा-

अहो, केयं नु खलु चित्तस्य वचनगोचरातिचारिणी पुरस्तात्संध्याघनस्येव रागकलुषता, क्व चेदानीं क्षारजलधौतस्य वसनस्येव। निर्मलभावः क्व तादृशं पाशपतितस्य पक्षिण इव चक्षुषश्चापलम्, क्व चेदानीं कुलिशकीलितस्येव निश्चलभावः। हतविधे, किमपरः कोऽपि न तवास्ति वधोपायो येनैवमुपप्रलोभ्य प्राणिनः संहरसि। कथं हि त्वमेवमसि मध्यस्थो यदेवमसदृशे वस्तुनि देहिनः स्नेहयसि। मुधा च तवैवमतिदारुणकर्मणो धर्म इति प्रसिद्धिः। अहो, कथमिव लोकस्याहार्यगुणरमणीयतावपुषि वपुषि शुनः

---

तत्पतिना तदैव नगरं प्रविशन्ती तेन सह दृष्टा धृता च। 'क्व गच्छसि' इति विवादे संजाते तया प्रोचे—'अयं देशिको मम भर्ता भवति' इति। राजपुत्रमा(आह)—'यदेव यदन्मदीय वनदेवतासमक्षं त्वया गृहीतं तन्मे समर्पणीयम्।' तयोक्तं(वादम्)—'समर्पितम्।' इत्युक्ते सति सा तत्काल मृता। आचारदर्शिभिश्च स राजपुत्र स्वयं पृष्ट—'कोऽयं वृत्तान्तः।' स च श्लोकं पपाठ—'यदर्थे च मही त्यक्ता जीवितार्धं च हारितम्। सा मां त्यजति निःस्नेहा कः स्त्रीणां वल्लभो नरः॥' मां त्यक्त्वा देशिकेन सह गच्छतीति तात्पर्यार्थः॥

अहो आश्चर्ये। नु वितर्के। खलु वाक्यालंकारे। क्व इयं पुरस्तात् पूर्वं मम चित्तस्य वचनगोचरातिचारिणी वक्तुमशक्या रागकलुषता। मम कस्येव। सन्ध्याघनस्येव। यथा संध्याघनस्य रागकलुषता भवति। क्व चेदानीमधुना चित्तस्य निर्मलभावः। कथंभूतस्य मम चित्तस्य। क्षारजलधौतस्य वसनस्येव यथा क्षारजलेन धौतं श्वेतद्रव्योदकेन प्रक्षालितं वसनं निर्मलं भवति। क्व तादृशं मम चक्षुषश्चापलम्। कथंभूतस्य चक्षुषः। पाशपतितस्य पक्षिण इव यथा पाशपतितः पक्षी चपलो भवति। क्व चेदानीमस्मिन्नवसरे चक्षुषो निश्चलभावो वर्तते। कथंभूतस्य। कुलिशकीलितस्येव यथा कुलिशेन कीलितं विद्धं चक्षुः निश्चलं भवति। हतविधे पापिष्ठविधातः, किं तवापरः कोऽपि अन्यः कोऽपि वधोपायो नास्ति न वर्तते येन कारणेन एवं अनृतमतिमहादेवीप्रकारेण उपप्रलोभ्य लोभं दर्शयित्वा वशयित्वा प्राणिनो जन्तून् मलदशान् संहरसि मारयसि। कथं केन प्रकारेण। हि निश्चयेन। त्वं भवान् एवममुना प्रकारेण मध्यस्थः सर्वसाधारणो भवसि। यत् यस्मात् कारणादेव असदृशे वस्तुनि अतुल्ये पदार्थे देहिनो जन्तून् स्नेहयसि स्नेहयुक्तान् करोषि। एवं च सति भवतोऽतिदारुणकर्मणः अतिशयेन हिंसकस्य धर्म इति प्रसिद्धिः प्रख्यातिर्मुधा वर्तते। अहो आश्चर्यम्। कथमिव केन प्रकारेण लोकस्य निर्विवेकस्य वपुषि तर्षः तृष्णा कथं वर्तते। कथंभूते वपुषि। अहार्यगुणरमणीयतावपुषि अहार्यगुणेन सुगन्धवस्त्रादिसंयोगेन रमणीयतां मनोहरत्वमवपुष्णातीति अहार्यगुणरमणीयतावपुट् तस्मिन्। कस्मिन् कस्येव। शुनः कुक्कुरस्येव यथा शुनः सारमेयस्य

भण्डैरिव वाद्यते । न वेत्ति बहिश्छायाप्रतारितमुदुम्बरफलस्येवास्य कलेवरस्यान्तर्बीभत्सताम् । न चैतदथवा शोच्यम्, किं नु खल्वयं वराकः करोतु जन्तुः । कर्मैव तावत्प्रथममनुकूलं न भवति जीवलोकस्य । यतः क्व निसर्गतः पर्वदिवसानीव पुराकृतपुण्यलवविपाकदुर्लभानि प्राणिषु स्त्रीविलसितानि, क्व च तदुच्छेदनकरागमः कृतान्तपञ्चकुलसमः स्वच्छन्दवृत्तेर्गुणविद्वेषणस्याधर्मरुचेरज्ञानतिमिरस्यैश्वर्यमहाग्रहस्य च समवायः । यथाजनाभिप्रायमुपदर्शितविषयस्ते च ते चागमाः प्रमाणम् । उपतर्पितदेवपित्रतिथिचेतसि हि पुंसि किमप्यशुभं कर्म न भवति दोषायेति, तैस्तैर्निदर्शनैरभ्युपगमयितारः प्रायेण समीपवर्तिनः पुरुषाः । यौवनाविर्भावः पुनः कादम्बरीयोग इव परं मुमुक्षूणामपि नाविकार्य मनांसिविश्राम्यति ।

---

नर्मसचिवैरिव वाद्यते । न वेत्ति । किं कर्तुं न वेत्ति जगत् लोकः । बहिश्छायाप्रतारित मन् त्वद्गुणवर्णनवञ्चित मन् उदुम्बरफलस्येव जन्तुफलस्येव अस्य कलेवरस्य अस्य शरीरस्य अन्तर्बीभत्सता अन्तर्मध्ये विरूपकत्व (सूकावनत्व) न वेत्ति जगत् । न चैतत् अथवा शोच्य न शोचनीय अथवा । नु वितर्के, खलु निश्चयेन, अयं वराको जन्तुः किं करोतु किं कर्तुं न शक्नोति । कर्मैव पुराकृतं कर्म तावत् अनुक्रमेण प्रथमं पूर्वं जीवलोकस्य जन्तुसमूहस्य अनुकूलं हितं न भवति । यतो यस्मात् कारणात् क्व निसर्गतः स्वभावेन पर्वदिवसानीव दीपोत्सवादिदिनानीव प्राणिषु स्त्रीविलसितानि । कथंभूतानि । पुराकृतपुण्यलवविपाकदुर्लभानि पूर्वोपार्जितपुण्यलेशोदयेन दुष्प्राप्याणि वर्तन्ते । क्व च तदुच्छेदनकरागमः पुण्योच्छेदनकरमिथ्यागमः मिथ्याशास्त्रम् । तदुच्छेदनकरागमः कथंभूतः । कृतान्तपञ्चकुलसमः सिद्धान्तपञ्चकुलसमानः । सूत्रधारायस्कारादयो यथा पञ्चकुलानि आचारं लोपयन्ति तथा । स्वच्छन्दवृत्तेः शिक्षाचारस्य (?) [प्रथमस्य], गुणविद्वेषणस्य [द्वितीयस्य], अधर्मरुचेस्तृतीयस्य, अज्ञानतिमिरस्य चतुर्थस्य, ऐश्वर्यमहाग्रहस्य च पञ्चमस्य । एतेषां पञ्चानां पञ्चकुलानामिव समवायः समुदायः पुण्योच्छेदनकरः । मिथ्याशास्त्रमित्यर्थः । यथाजनाभिप्रायं लोकमनोभिप्रायानुसारेण उपदर्शितविषयः । यथा लोको वाञ्छति तथैव शास्त्रं पठन्ति मिथ्यादृष्टयः । ते च ते आगमा जगत्प्रसिद्धाः सिद्धान्ताः किल प्रमाणम् । तथा हि—उपतर्पितदेवपित्रतिथिचेतसि यस्य पुनः स तथा तस्मिन् ईदृग्विधे हि निश्चयेन पुंसि किमपि किंचिदपि अशुभं कर्म दोषाय न भवति इति पठन्ति । तैस्तैः प्रसिद्धैः निदर्शनैः कुदृष्टान्तैः अभ्युपगमयितारः अङ्गीकर्तारः कारयितारो वा प्रायेण समीपवर्तिनः पुरुषा भवन्ति । यौवनाविर्भावस्तारुण्यप्रादुर्भावः पुनश्च कादम्बरीयोग इव मदिरापानमिव परं निश्चयेन मुमुक्षूणामपि मोक्षमिच्छूनामपि पुरुषाणां मनांसि अविकार्य विकारमकारयित्वा

वाच्यमानं पुस्तकमिव प्रतिक्षणमवहीयन्ते सकलजनसाधारणानामीश्वराणामप्यायूंषि । मुनिशिरसिजेषु वृद्धिरिव न चिरस्थायिनी भवति देहकान्तिः । स्त्रीमनसोऽप्यस्थिरतरमिदं यौवनमार्जवं जवीभावोपनीते विनिपाते च पतति । न भवत्यल्प इव महानगोचरः । कीनाशस्तु यः परं बीभत्सुमपि शरीरिणमतिस्पृहयालुतया गिलति, स कथं स्वभावसुभगं परिहरेत् । लघ्वेव मे वृत्तिच्छेदो मा भूदिति स यदि कदाचित्कानिचिद्दिनानि दन्तान्तर इवास्ते, तदावश्यं विषयविजयप्रासादविनिर्माणादिव भवितव्यं शिरसि पलितवल्लरीपताकारोहणेन, हितोपदेशनिषेधपरिपाकादिव बाढमुत्कम्पितव्यमुत्तमाङ्गेन, मनःस्फुरितविगमादिव नितरामाचरितव्यं चक्षुस्तिमिरपटलेन, संधिबन्धविघटनादिवातीव स्यन्दितव्यं वदनकन्दरेण,

---

ढेव निरूपयति । वाच्यमानं पुस्तकमिव प्रतिक्षण क्षण प्रति सकलजनसाधारणाना सर्वलोकसदृशाना ईश्वराणामपि पितॄणामपि आयूंषि अवहीयन्ते तृटु(नश्य)न्ति । मुनिशिरसिजेषु वृद्धिरिव मुनीनां केशेषु वर्धनमिव देहकान्ति. चिरस्थायिनी भवति । स्त्रीमनसोऽपि स्त्रीणा चित्तादपि अस्थिरतरं चपलतरं इद यौवन आर्जवं जवीभावोपनीते संसारस्वभावादागते विनिपाते मरणे न पतति म्रियते एव । अल्प इव क्षुद्रलोक इव महानपि राजाधिको गुरुलोकोऽपि मृत्योरगोचरो न भवति । कीनाशो यम. य पर निश्चयेन बीभत्सुमपि शरीरिण विरूपकमपि जन्तु प्रतिस्पृहयालुतया गिलति वाञ्छकशीलतया भक्षयति, स कीनाशः स्वभावसुभग निसर्गात् प्रीतिजनक राजान कथ केन प्रकारेण परिहरेत् । अपि न कथमपि परिहरेदित्यर्थ. । राजान पूर्वमेव प्रायेण गिलतीत्यर्थः । लघ्वेव शीघ्रमेव मे मम कीनाशस्य वृत्तिच्छेदो ग्रासविनाशो मा भूत् मा भवेत् इति कारणात् स कीनाश यदि चेत् कदाचित् कस्मिंश्चिदवसरे कानिचिद्दिनानि कांश्चिद्दिवसान् दन्तान्तर इव आस्ते न गिलतीति । तदा तस्मिन् काले अवश्य निश्चयेन शिरसि पलितवल्लरीपताकारोहणेन भवितव्य भाव्यम् । कस्मात् । उत्प्रेक्षते—विषयविजयप्रासादविनिर्माणादिव । राजा यथा विषयस्य देशस्य विजये सति परदेशग्रहणे सति प्रासादस्य निर्माणात् प्रासादोपरि उच्च ध्वजमारोपयति, तथा यमोऽपि वृद्धस्य विषयिणा स्पर्शादीना विजये सति प्रासादनिर्माणात् प्रसन्नतानिर्माणात्पलितध्वजमारोपयति । तद्वृद्धमस्तकध्वजस्यारोहणेन अवश्य भवितव्यम् । तथा उत्तमाङ्गेन बाढमतिशयेन उत्कम्पितव्य उत्कम्पनीयम् । कस्मात् । उत्प्रेक्षते—हितोपदेशनिषेधपरिपाकादिव । तथा चक्षुर्लोचन तिमिरपटलेन नितरामाचरितव्यं आचरणीयम् । कस्मात् । उत्प्रेक्षते—मन स्फुरितविगमादिव । तथा वदनकन्दरेण अतीव स्यन्दितव्यम् । कस्मात् । उत्प्रेक्षते—संधिबन्धविघटनादिव शरीरसंधिबन्धाना स्फुटनादिव तथा दन्तवल-

केवलं महापुरुषेषु प्रतिष्ठां प्रत्यवसादयितुम्, दुर्जनेषु क्षणमात्रं सखीभावमुपयाति । अलमतिविस्तरेण । अहं तावत्परवशेनैव गलितमोहपाश इवाभूवम् । किं तु सकलजनविदितमप्रियं न मे किमप्यस्ति प्रव्रजतः । पाणिपरिगृहीता भुजङ्गीव सकृदेव मोक्तुमशक्या चेयं राज्यलक्ष्मीः । कष्टश्च खलु महत्यैश्वर्ये देहिनामात्मलाभः, यत्र श्रायसमपि कर्माचरितुं न लभ्यते स्वातन्त्र्येण । मन्ये च मद्दर्शनावलम्बनजीविता कुलदेवतेव न मामनुमंस्यते तपस्यायामम्बादेवी । नवे च वयसि मयि संजातनिर्वेदे विधास्यन्तेऽशुभकर्मपरिणामा इव संहत्य मन्त्रिणो मनीषितस्यान्तरायम् । इयतोऽवस्थान्तरस्य हेतुर्लोकरञ्जनेनापि भविष्यति मे विष्टिरिव प्रस्थानविघातकारिण्यमृतमतिमहादेवी । दुष्करमसमग्रहसंदोह इव श्रेयसि मामनुलोमयिष्यति सामन्तनिवहः ।

---

नार्हसः कृत्वा उपस्थितात्यागेनापि सती केवलं महापुरुषेषु महानुभावेषु प्रतिष्ठां शोभां प्रत्यवसादयितुं विनाशयितुं इच्छयति वाञ्छति । केव । गलमांव । यथा राक्षसी माहंसराजनापि सती सत्पुरुषेषु शोभां विनाशयति । तथा सा लक्ष्मीर्दुर्जनेषु क्षणमात्रं मुहूर्तमेकं सखीभावं सखीत्वं उपयात्यनुगच्छति । अलमतिविस्तरेण । पूर्वं अहं यशोधरस्तावदनुक्रमेण परवशेनैव पराधीनत्वेनैव गलितमोहपाश इव अभूवं संजातः । किं तु मे मम प्रव्रजतो दीक्षां गृह्णतः अप्रियं किमपि नास्ति । कथंभूतमप्रियम् । सकलजनविदितं सर्वलोकविख्यातम् । एकं पूर्वोक्तं वैराग्यकारणं विहाय अन्यदन्यत् विप्रियं वैराग्यकारणं किमपि नास्ति । पाणिपरिगृहीता हस्तेन धृता भुजङ्गीव राज्यलक्ष्मी. ........................................ यत्र महत्यैश्वर्ये श्रायसमपि कर्म श्रेयस्करमप्याचरणं स्वातन्त्र्येण स्वाधीनतया आचरितुं न लभ्यते कर्तुं न शक्यते । 'शिंशपादीनां वृद्धेरपवादः' इत्यनेन सूत्रेण आकारो वक्तव्यः । शिंशपाया इदं शांशपम् । तथा श्रेयसि भवं श्रायसम् । मन्ये च जानामि च मद्दर्शनावलम्बनजीविता मदवलोकनाधारेण प्राणिता कुलदेवतेव गोत्रदेवीव अम्बादेवी चन्द्रमतिमहादेवी मन्माता तपस्यायां प्रव्रज्यायां नानुमंस्यते नानुज्ञां दास्यति । नवे च वयसि यौवने मयि विषये संजातनिर्वेदे उत्पन्नसंसारशरीरभोगवैराग्ये मन्त्रिणः सचिवाः संहत्य एकीभूय मनीषितस्य मनोवाञ्छितस्य अन्तरायं विघ्नं विधास्यन्ते करिष्यन्ति । क इव । अशुभकर्मपरिणामा इव पापकर्मोदया इव । इयतः एतावतः अवस्थान्तरस्य वैराग्यस्य हेतुः कारणभूता लोकरञ्जनेनापि अमृतमतिमहादेवी अजितमहाराजनन्दना प्रस्थानविघातकारिणी तपोवनगमननिषेधका मे मम भविष्यति संजनिष्यति । केव । विष्टिरिव भद्रमकरणमिव । श्रेयसि श्रेयस्करे कर्मणि मोक्षसाधने सामन्तनिवहो मदाज्ञावर्तिनृपसमूहः यत् अनुलोमयिष्यति सानुकूलो भविष्यति तद्दुष्करं दुःसाध्यम् । सामन्तनिवहः क इव । असमग्रहसंदोह इव विषमग्रहसमूह इव

प्रार्थिते वस्तुनि पाश इव करिष्यति गतिभङ्गं पादयो पतिविसर्गप्रणयी युवराजः । किमेकविपक्षतादोषादेव सकलमपि वनमुपहन्तुं युक्तमिति विलपदन्तःपुरं शिवाकुलमिव विप्रविप्स्यत्यभिलषितयात्रासमयम् । तिर्यग्गामिन्यन्ति च पतत्रिण इव पुरवृद्धाः कामितस्य प्रतिलोमनाय । यतः ।

अप्रार्थितोऽपि कामेषु पापायाभिसरो जनः ।
धर्मानुष्ठानवेलायां निसर्गात्प्रतिलोमनः ॥

तदहमत्र कं नु खलूपायमारचयामि । अथवा रचित एवोपायः । तथा हि—यदीयं विभावरी कुशलेन विभास्यति, तदा सर्वावसरं सभामण्डपमास्थायाहूय चाम्बादेवीमखिलं चानुचरलोकमिदमेकमशिक्षितमननुभूतपूर्वमननुचितमप्युपसितपद्मनिरसनो निकटकूटकपटमनुष्ठास्यामि । भवति हि

---

सिद्धान्तमिव । प्रार्थिते वस्तुनि तपश्चरणकरणे मतियात्रं करिष्यति गमनान्तरायं विधास्यति । कोऽसौ । विसर्गप्रणयी ममापवर्गवाञ्छकः युवराजो यशोमतिकुमारः । किं कृत्वा पतिमार्गं करिष्यति । पादयोः पतनं चरणग्रहणं कुर्वन् । क इव । पाश इव । यथा पादयोः पतितः पाशो गतिभङ्गं करोति । किं एकविपक्षतादोषात् एव नगरमपि वनं उपहन्तुं युक्तं छेत्तुं नाशनम् इति इदं विलपत् अर्थकं कुर्वत् अन्तःपुरं अवरोधसमूहः अभिलषितयात्रासमयं तपोवनगमने विप्रविप्स्यति अन्तरे एष्यति । किमिव । शिवाकुलमिव शृगालीसमूहमिव । तिर्यग्गामिन्यन्ति कामितस्य प्रतिलोमनाय तपोवनगमनविरोधनाय । के ते । पुरवृद्धा नगरमहत्तराः । क इव । पतत्रिण इव । प्रस्थाने वामाः पक्षिणः अपशकुनं भवन्ति । यतो यस्मात् कारणात् । अप्रार्थित इत्यादि । अप्रार्थितोऽपि अयाचितोऽपि जनो लोकः कामेषु पापनिमित्तं अभिसरो व्यापारवान् सोद्यमो भवति । धर्मानुष्ठानवेलायां पुण्यकर्मविधानावसरे निसर्गात् स्वभावेन प्रतिलोमनः प्रतिकूलो भवति । तत्तस्मात् कारणात् कतमोपायं अत्र तपोवनगमने । नु इति वितर्के । खलु निश्चयेन । अनुष्ठानमारचयामि । अथवा रचितः उपायो मया एवोपायः । तथा हि । तमेवोपायं दर्शयति—यदि चेदियं विभावरी आगामिनी रात्रिः कुशलेन निर्विघ्नेन विभास्यति यास्यति तदा तस्मिन् काले सर्वावसरं नाम सभामण्डपं आस्थाय अधिरोहिय । 'अधिशीङ्स्थासां कर्म' इति वचनादधिकरणे द्वितीया । अम्बादेवीं चन्द्रमतीं अखिलं अनुचरलोकं च आहूय आकार्य इदं यत्नमनवधानेनाशिक्षितं निकटकूटकपटं अनुष्ठास्यामि अनुष्ठानं करिष्यामि । कथंभूतं निकटकूटकपटम् । एकमद्वितीयम् । पुनः कथंभूतम् । अशिक्षितं न केनापि उपदिष्टम् । पुनः कथंभूतम् । अननुभूतपूर्वं पूर्वमननुभूतम् । पुनः कथंभूतम् । अनुचितमपि अयुक्तम् । कस्मात् करिष्यतीत्याह कपटारम्भाभिमत निस्तरणमाह—

मृषोद्यमपि प्रायेण श्लोघ्यकर्मणे, यत्रात्मनो नैहिकामुत्रिकफलविलोपः । मायापि खलु परं निःश्रेयसमेवारभते, या न भवति परेषां परमार्थतः प्रतारणकरी । वहिरतिपरुषापि क्रिया सुकृतमेवातनोति, यदि न मनस्तमोबहुलम् । अवसानेष्वन्यथावृत्तिरपि व्यापारो न करोति कामप्यर्थक्षतिम्, यदि न विनेयानां जनयति व्यसनानि । तथा च प्रवचनम्—वासुपूज्यभगवतो वन्दनामिषेण गतो मिथिलानगरीनाथः पद्मरथो बभूव गणधरदेवः । मातुः कानिचिद्दिनानि दन्तारोऽपि पञ्चशतयुवतिरतिमारः सुकुमारश्च साधयामासा-

---

कथंभूतोऽहम् । उपस्थितयक्षवलनिस्तरणः समागतव्यसननिवारकोऽहं यस्मात् । भवति संजायते हि यस्मात् कारणात् मृषोद्यमपि असत्यवचनं प्रायेण बहुलतया श्लोघ्यकर्मणे श्रेयसे भवति, यत्र मृषोद्ये आत्मनो निजजीवस्य ऐहिकामुत्रिकफलविलोपो न भवति इहलोकपरलोकसुखविनाशो न भवति । मायापि कूटकपटोऽपि । खलु वाक्यालंकारे निश्चये वा । परमुत्कृष्टं निःश्रेयसमेव शुभमेवारभते शुभमेव करोति, या माया परेषामपरप्राणिनां परमार्थतो निश्चयेन प्रतारणकरी वञ्चनकरी न भवति । 'आपदर्थायाणा काले माया कर्मो यतित्वनाहम्स' इति वचनात् । तथा चोक्तं लौकिकं वचनम्—'''नर्मसुफ वचनं हिनस्ति न स्त्रीषु राजन्न विवाहकाले । प्राणात्यये सर्वधनापहारे पञ्चानृतान्याहुरपातकानि ॥' बहिरतिपरुषापि क्रिया लोचनकरणानि उपवासदानादिकापि सुकृतमेवातनोति करोति, यदि चेत् मनस्तमोबहुलं सक्लेशपरं न भवति । अवसानेषु प्रान्तेषु अन्यथावृत्तिरपि व्यापारः असत्यव्यापारोऽपि कामपि कांचिदपि अर्थक्षतिं पुण्यविनाशं न करोति न विदधाति यदि चेत् विनेयानां शिष्या(ष्या)णां व्यसनानि दुःखानि न जनयति । तथा च प्रवचनं सिद्धान्तवचनम् । किं तत्—मिथिलानगरीनाथः पद्मरथो नाम राजा वासुपूज्यभगवतो द्वादशतीर्थंकरस्वामिनो वन्दनामिषेण वन्दनाभक्तिच्छलेन गतश्चम्पां पुरीं प्राप्तो दीक्षां गृहीत्वा गणधरदेवो बभूव । चान्यत् सुकुमारः सुकुमालस्वामी अभिनवदीक्षाग्रहणं साधयामास समाधितवान् । कथंभूतः सुकुमारः । मातुर्निजजनन्याः कानिचित् कियन्त्यपि दिनानि दन्तारोऽपि एतावत्सु दिनेष्वहं दीक्षां न गृहीष्यामीति उक्तवचनोऽपि । पुनः कथंभूतः सुकुमारः । पञ्चशतयुवतिरतिमारः पञ्चशतसंख्या या युवतिरतयस्तासां मारः कामदेवसदृशः । कथमेतत् । अस्यामेवोज्जयिन्यां नगर्यां महति वणिग्वरकुले लब्धजन्मा सुकुमारस्वामी किल मुनिदर्शनमात्रेणैव यतिर्भविष्यतीति कल्पितलग्नः सपक्षेन रक्षमाणोऽपि

---

१. 'विवाहकाले रतिसंप्रयोगे प्राणात्यये सर्वधनापहारे । विप्रस्य चार्थे ह्यनृतं वदेत पञ्चानृतान्याहुरपातकानि ॥' इति कर्णपर्वणि जिष्णुं प्रति कृष्णोक्तिः

द्दासाद्दस सामन्तसमाज, समाकर्णय सम्यगिममुदन्तव्यतिकरम्। राज्यलक्ष्मीरक्षाक्षमप्रतापप्रसर निखिलमण्डलेश्वरप्रणामकर्कशकर दौवारिक, निषीदावधारयितुमेनं वृत्तान्तम्। एवमन्योऽपि यः कश्चिन्मत्प्रणयी परिजनः स क्षणमेकमनन्यमनाः शृणोतु। अद्य विभातशेषायां निशि स्वप्नमहमेवमदर्शम्—आत्मनः किलापनीय राज्यभारं यशोमतिकुमार इव निहितवान्। विहाय राजधानीमाश्रमावन्यामिव प्राविक्ष्य(क्ष)म्। उत्सृज्य कनकासनमुपलगहन इवोपविष्टवान्। अवमत्य राजमन्दिरमद्रिकन्दरमिवाशिश्रियम्। अवधूय वसुधाधिपत्यचिह्नानि तपःश्रीलिङ्गानीव गृहीतवान्। परिहृत्य विषयरसमनुष्ठानमानस इवाभूवम्। विमुच्य भवादृशं परिजनं मुमुक्षुजनैरिव संग-

---

साहस महाहवभरारम्भेषु महासंग्रामसमारम्भेषु निर्व्यूह्मानानि महामाहसानि महाद्भुतकर्माणि येन स तथा तस्य संबोधनं हे तथोक्त। हे सामन्तसमाज सन्निविष्टवर्तिनृपसमूह, इम प्रत्यक्षीभूतमिममुदन्तव्यतिकरं वृत्तान्तप्रपञ्चं सम्यक्सावधानतया समाकर्णय चक्षुर्लक्षीभूय त्वमाकर्णय। हे राज्यलक्ष्मीरक्षाक्षमप्रतापप्रसर राज्यलक्ष्म्या रक्षाया प्रतिपालने क्षमः समर्थः प्रतापप्रसरो यस्य तस्य संबोधन हे तथोक्त। हे निखिलमण्डलेश्वरप्रणामकर्कशकर निखिलाना मण्डलेश्वराणां परचक्राधिपतीनां प्रणामे नम्रीकरणे कर्कशः कठिनतरः करः पाणिर्यस्य स तथा तस्य संबोधनं हे तथोक्त। हे दौवारिक प्रतीहार, एन प्रत्यक्षीभूत वृत्तान्त मद्वार्ता अवधारयितुं निषीद त्वमुपविश। एवमनेन प्रकारेण अन्योऽपि अपरोऽपि चः कश्चित् मत्प्रणयी मयि स्नेहवान् परिजनः कुटुम्बवर्गः वर्तते स सर्वोऽपि क्षणमेकं अनन्यमनाः सावधानचित्त सन् शृणोतु। किमाकर्णयत इति चेत्—अद्य अस्यां निशि रात्रौ अहं यशोधर एवं वक्ष्यमाणलक्षणोपलक्षितप्रकारेण स्वप्न अदर्शं दर्शवानहम्। 'दृशेर्ण्योरति' इति वननादगुणे गुणः। कथंभूतायां निशि। विभातशेषायां विभातः प्रभातः शेष उर्वरितो यस्या निशः सा विभातशेषा तस्याम्। पश्चिमरात्रावित्यर्थः। तत्किमित्याह—किलेति लोकोक्तौ शास्त्रोक्तौ वा निश्चये वा। आत्मनो राज्यभारं अपनीय दूरीकृत्य यशोमतिकुमारे युवराजे निहितवानिव स्थापितवानिव। राजधानीं पत्तनमिदं विहाय परित्यज्य आश्रमावन्यां तपोवने प्रविक्ष्यमिव प्रविष्टवानिव। कनकासन सुवर्णसिंहासनमुत्सृज्य परित्यज्य ······ ·· · ··· · ··· ········ · ··· · · · ···· अद्रिकन्दरं पर्वतगुहां आशिश्रियमिव आश्रितवानिव। वसुधाधिपत्यचिह्नानि छत्रचामरादीनि अवधूय परित्यज्य तपःश्रीलिङ्गानि तपोलक्ष्मीचिह्नानि पिच्छकमण्डल्वादीनि गृहीतवानिव जगृहे इव। विषयरसं स्वादं परिहृत्य परित्यज्य अनुष्ठानमानसे क्रियासरोवरे अभूवमिव बभूवेव।

---

१. 'दृष्टवानहम्' इति स्यात्. २. 'अनुष्ठानतर्मानसे क्रियाकर्श्वरे' इति स्यात्.

श्रुतान्यधीतानि, मही प्रसाधिता, दत्तानि वित्तानि यथार्थमर्थिने ।
पुत्रोऽप्ययं वर्महरः प्रवर्तते, सर्वत्र संपूर्णमनोरथागमः ॥

विषयजोऽपि सुखतर्षो न मे मनः प्रायेण प्रत्यवसादयितुमीश्वरः । यतः ।

सकृद्विज्ञातसारेषु विषयेषु मुहुर्मुहुः ।
कथं कुर्वन्न लज्जेत जन्तुश्चर्वितचर्वणम् ॥

न श्रमान्तकसंपर्कात्सुखमन्यद्भवोद्भवम् ।
तेन सन्तः प्रतार्यन्ते यदि तत्त्वज्ञता हता ॥

बाल्ये विद्याग्रहणादीनर्थान्कुर्यात्, कामं यौवने, स्थविरे धर्मं मोक्षं चेत्यपि, नायमेकान्ततोऽनित्यत्वादायुषो यथोपपदं वा सेवेतेत्यपि श्रुतेः । अपि च ।

---

**श्रुतानीत्यादि** । श्रुतानि शास्त्राणि अधीतानि पठितानि । मही पृथ्वी प्रसाधिता वशीकृता । अर्थिने प्रयोजनवत्पुरुषाय यथार्थं यथोक्तं वित्तानि धनानि दत्तानि विश्राणितानि । पुत्रोऽपि अयं यशोमतिकुमारः वर्महरः कवचधरः प्रवर्तते । सर्वत्र सर्वस्मिन् कार्ये संपूर्णमनोरथागमः परिपूर्णमनोरथप्राप्तिकोऽहं वर्ते । समुच्चयालंकारः ॥

**विषयज इत्यादि** । विषयजोऽपि स्पर्शादिविषयोत्पन्नोऽपि सुखतर्षः सुखाभिलाषो मे मम मनः कर्मतापन्नं प्रायेण बाहुल्येन प्रत्यवसादयितुं ग्लापयितुं ईश्वरः समर्थो न वर्तते । यतः यतः कारणात् ।

**सकृदित्यादि** । सकृद्विज्ञातसारेषु सकृदेकवारं विज्ञातः परीक्षितः सारः श्रेष्ठत्वं बलं वा येषां विषयाणां ते सकृद्विज्ञातसारास्तेषु विषयेषु स्रक्चन्दनवनितादिषु मुहुर्मुहुः वारंवारं चर्वितचर्वणं आस्वादितास्वादनं कुर्वन् अनुतिष्ठन् जन्तुर्जीवः कथं केन प्रकारेण न लज्जेत न लज्जां कुर्यात । आक्षेपालंकारः ॥

**न श्रमेत्यादि** । श्रमान्तकसंपर्कात् श्रमान्तके सुरतक्रीडापर्यन्ते यः संपर्कः संस्पर्शः सुखानुभावः श्रमान्तकसंपर्कस्तस्मात् अन्यदपरं भवोद्भवं संसारोत्पन्नं सुखं निर्वाणं न वर्तते । तेन सुखेन यदि चेत् सन्तो विद्वांसः प्रतार्यन्ते वञ्च्यन्ते तर्हि तेषां तत्त्वज्ञता हता तत्त्वज्ञानं नष्टमेव । जातिरलंकारः ॥

**बाल्ये इत्यादि** । बाल्ये शिशुत्वे विद्याग्रहणादीन् विद्याभ्यासगुणादीन् अर्थान् कार्याणि कुर्यात् विदध्यात् । यौवने तारुण्ये कामं काममेवं कुर्यात् विदध्यात् । स्थविरे वृद्धत्वे धर्मं मोक्षं च कुर्यात् । इत्यपि । यथोपपदं वा यथाप्रस्तावं वा कामादीन् सेवेत भुञ्जीत इत्यपि वचनं श्रुतेर्वेदस्य । अयं प्रत्यक्षीभूत एकान्ततो न वर्तते । कस्मात् । आयुषः आयुःकर्मणोऽनित्यत्वादस्थिरत्वात् । अपि च तथा च ।

ध्यानानुष्ठानशक्तात्मा युवा यो न तपस्यति ।
स जराजर्जरोऽन्येषां तपोविघ्नकरः परम् ॥

तदहमेतत्समयदर्शनमप्यपगमदर्शनं कर्तुमीहे, यदि तत्रभवन्तो न मे भवन्त्युत्सर्गापवादा इव प्रतिबन्धोपायाः । प्रत्युपपन्नं चैतत् । पुरा हि युष्माकमेकैकस्य परिगणनातीतानि परिक्लेशेनाप्यनभ्यर्थितान्यहं संपादितवान् । भवद्भिः पुनरशेषैः किमेकमपि समयमभ्यर्थितं न मे संपाद्यत इति । तथाप्यमी परमार्थेन प्रतिसमभ्यायेन वा तपस्यायां यदि न मामनुमन्यन्ते, निरसाप्येतामात्महितमनुष्ठास्यामि । को नु खलु विघटितं चेतः स्फटिकवलयमिव सुधापि संधातुमर्हति । निसर्गादविरुद्धे हि म-

ध्यानेत्यादि । यः पुमान् युवा तरुणः सन् न तपस्यति तपो न विदधाति । कथंभूतः । ध्यानानुष्ठानशक्तात्मा ध्याने चित्तनिरोधलक्षणे अनुष्ठाने क्रियाकरणे शक्तः समर्थ आत्मा यस्य स तथा । स पुमान् जराजर्जरो जरया जर्जरशरीरत्वमुपगतः सन् अन्येषामपरतपस्विनां परं केवलं तपोविघ्नकरो भवति । अन्यस्मात् निरुद्धभूता यस्य निसर्गः ॥

तत्तस्मात् कारणात् अहमेतदिदं समयदर्शनं समयस्यापगमदर्शनं तपश्चर्यारम्भं कर्तुमीहे इच्छामि, यदि चेत् तत्रभवन्तो पूज्या भवन्तो प्रतिबन्धोपाया निषेधोपाया मे मम न भवन्ति चेत् । भवन्तः क इव । उत्सर्गा इव । यथा उत्सर्गाः विधेयोपविधयः पालनीयाः सामान्येनोक्तविधीनां प्रतिबन्धोपाया भवन्ति । 'अन्यर्थस्यापवादेरपवादो विधिर्निवृत्ताम्' इति वचनात् । प्रत्युपपन्नं चैतत् प्रतिपन्नं घटित भवतीदं भवद्भिः । पुरा पूर्वं हि यस्मात् कारणात् युष्माकं भवतां एकैकस्य परिगणनातीतान्यनभ्यर्थितानि अभ्यर्थितानि प्रार्थितानि परिक्लेशेनापि संपादितवान् । भवद्भिर्युष्माभिः पुनरशेषैरपि सर्वैरपि समयमेकमभ्यर्थितं मे मम किं न संपाद्यते इति भण्यते । तथापि भवद्भिरेव प्रार्थिते न संपाद्यते । अमी भवन्तो यदि मां तपस्यायां(यां) तपश्चरणे न अनुमन्यन्ते मन्तु तर्हि प्रतिसमभ्यायेन समयमिषेणविरोधेन परमार्थेन वा एतान् निरस्य निषेध्यापि आत्महितं तपोलक्षणं अनुष्ठास्यामि करिष्यामि । नु इति वितर्के प्रश्ने वा । खलु निश्चयेन । विघटितं चेतः सुधापि निरवयवमपि संधातुं कोऽर्हति । अपि तु न कोऽपि संधातुं शक्तो भवति । किमिव । स्फटिकवलयमिव स्फटिकमणिकङ्कणमिव । यथा स्फटिकमणिवलयं स्फुटितं न कोऽपि संदधाति संधानं करोति । निसर्गात्

१ 'कैकस्यानीति' इति स्पष्ट. २. 'नापि संपादि-' इति स्पष्ट. ३ 'समयमिषेण भर-' इति स्पष्ट.

नसि मरुभूम्यामिव वृथा भवन्ति परजनस्य रसानयनक्लेशाः । अन्यत्र कृतनिश्चये हि चेतसि मरणोपदेश इव विफलो भवति निकटवर्तिनां प्रतिकूलतया मनःसमागमनविनियोगः । स्वभावनिष्ठुरं हि मनः शिलाशकलमिव न देवोऽपि शक्नोति पल्लवयितुम् । अभिनिवेशकर्कशे हि हृदये कुलिश इव न प्रवेशं लभन्ते गुणवत्योऽपि वधूनां प्रार्थनाः । किं च ।

देवस्यापि वचः प्रायः पुंसि जाताग्रहग्रहे ।
ऊषरे वर्षवन्न स्याद्गुणकारि मनागपि ॥

इति संकल्प्य अवश्यमिह जन्मनि न मे शयनतलमारोहन्ति महिला इति

---

स्वभावेन अस्निग्धे स्नेहरहिते मनसि चित्ते । हि निश्चयेन । परजनस्य अन्यलोकस्य रसानयनक्लेशा वृथा भवन्ति । कस्यामिव । मरुभूम्यामिव मरुस्थले इव । यथा मरुभूमौ परहस्ते पानीय दृष्ट्वा स्वयं तृषिते सति नयनयो क्लेशा भवन्ति, तथा तप.पिपासाया जनशृङ्गाररसदर्शन नेत्रयोः सतापाय भवति। अन्यत्र प्रव्रज्यादौ कृतनिश्चये विहितनियमे चेतसि सति । हि निश्चयेन । निकटवर्तिनां पुरुषाणां प्रतिकूलतया प्रतिलोमतया मनःसमागमनविनियोग चित्तस्य पश्चादायनाधिकारो विफलो भवति । क इव । मरणोपदेश इव । त्व म्रियस्व इत्युपदेशवान् यथा कोऽपि किंचित् कर्तुमीहते तस्य-पुरुषस्य मरणोपदेश. कथ दीयते । स मरणोपदेशो दत्तोऽपि विफलो भवति । स्वभावनिष्ठुरं निसर्गेण कर्कश मन । हि यस्मात् । देवोऽपि आस्तां तावन्मनुष्यः पल्लवयितुं न शक्नोति उल्लासयितु न समर्थो भवति । किमिव । शिलाशकलमिव पाषाणखण्ड कि पल्लवान् मुञ्चति । अभिनिवेशकर्कशे अभिप्रायेण कठिने हृदये । हि निश्चयेन । वधूनां प्रार्थना याचनानि गुणवत्योऽपि गुणकारिण्योऽपि प्रवेश सक्रमण न लभन्ते । कस्मिन्निव । कुलिशे वज्रे गुणप्रवेशो न भवति । किं च श्लोकमावेदयामि—**देवस्येति** । देवस्यापि वचः प्रायो जाताग्रहग्रहे उत्पन्नाग्रहपिशाचे पुंसि मनागपि गुणकारि उपकारक न स्यात् । किंवत् । ऊषरे वर्षवत् क्षारभूमौ मेघवर्षणवत् । किं कृत्वा पूर्वं अखिलजनावसरसभामण्डपमुपागतोऽस्मि । इतीदृश संकल्प्य इति पूर्वोक्तमर्थं मनसि कृत्वा । न केवल इति सकल्प्य । इति च पर्यालोच्य विचार्य । इतीति किम् । अवश्य निश्चयेन इह जन्मनि अस्मिन् भवे मे मम शयनतल शय्या महिला. स्त्रियो न आरोहन्ति नैव चढन्ति । कस्मिन् सति । निद्रादशा निद्रावस्था मयि अनुभवति सति । शङ्खेन ध्वनित कम्बुना गर्जितम् । अहो धर्मावलोक मारदत्त महाराज । शङ्खेन केनेव ध्वनितम् । मदभिमतसाधुकारवादेनेव मदभीष्टसाधुकारवचनेनेव । कथभूते मयि सति । प्रकाशान्धकारावृत्तिमन्थरितमन प्रसरे प्रकाशश्च उद्योत', अन्धकारश्च तम , तयोरावृत्तिरावरण तया मन्थरितो भृतो मन.प्रसरश्चित्तप्रवृत्तिर्यस्य स तथा तस्मिन् । वैराग्योद्वेगद्वयसहिते

तासु तासु किंवदन्तीषु वाचकः संसारस्वरूपनिरूपणप्रस्तावायातमिदमध्यगीष्ट ।

जरैव धन्या वनिताजनानां यस्याः समालिङ्गनभाजि पुंसि ।
अन्याङ्गनावीक्षणविभ्रमाणां न जातु जायेत समागमश्रीः ॥

ततश्च ।

यावज्जरा जरयते न शरीरशक्तिं
यावत्तमश्च न तनोति हृषीकवर्गे ।
तावत्त्वमाचर विचार्य तदत्र किंचि-
ज्जन्माङ्कुरः पुनरयं रमते न यत्र ॥

त्वं मन्दिरद्रविणदारतनूद्भवाद्यै-
स्तृष्णातमोभिरनुबन्धिभिरस्तबुद्धिः ।
क्लिश्नास्यहर्निशमिमं न तु चित्त वेत्सि
दण्डं यमस्य निपतन्तमकाण्ड एव ॥

---

संजातासु च तासु तासु जगत्प्रसिद्धासु किंवदन्तीषु लोकवार्तासु वाचकः संसारस्वरूपनिरूपणप्रस्तावायातं भवस्वभावकथनावसरोपढौकितं इदं वक्ष्यमाणलक्षणोपलक्षितप्रकारं सुभाषितं अध्यगीष्ट अध्यैष्ट अधीतवान् । पठितवानिति यावत् । इदं किमिति चेत्, इत्याह—

**जरैवेत्यादि** । हे राजन्, वनिताजनानां स्त्रीजनानां मध्ये जरैव वृद्धावस्थैव धन्या पुण्यवती वर्तते । यस्या जरायाः समालिङ्गनभाजि आश्लेषवति पुंसि पुरुषे अन्याङ्गनावीक्षणविभ्रमाणां अपरवनिताविलोकनशोभानां समागमश्रीरागमनलक्ष्मीर्जातु कदाचित् न जायेत नोत्पद्येत । अप्रस्तुतप्रशंसालंकारः ॥

ततश्च तस्मात् कारणात् । **यावदित्यादि** । हे आत्मन्, यावत्कालं जरा वार्धक्यं शरीरशक्तिं वपुःसामर्थ्यं न जरयते न ह्रापयते । च पुनर्न यावत्कालं हृषीकवर्गे इन्द्रियसमूहे तमोऽन्धकारं न तनोति न विस्तारयति । तावत्कालं त्वं भवान् तत्किंचिदत्रास्मिन् संवत्सरे विचार्य पर्यालोच्य आचर आचरणं कुरु । तत्किम् । यत्र यस्मिन् कर्मणि अयं प्रत्यक्षीभूतो जन्माङ्कुरः संसारप्रादुर्भावः पुनर्भूयोऽपि न रमते न क्रीडति । रूपकालंकारः ॥

**त्वमित्यादि** । हे चित्त हे आत्मन्, त्वं भवत् मन्दिरद्रविणदारतनूद्भवाद्यैः ... -धनकलत्रपुत्रप्रभृतिभिस्तृष्णातमोभिः काङ्क्षान्धकारैः अस्तबुद्धिर्नष्टबुद्धिः सन् अहर्निशं निरन्तरं क्लिश्नासि क्लेशवद्भवसि । कथंभूतैस्तृष्णातमोभिः । अनुबन्धिभिः दोषोत्पादकैः ।

कम्। वसुवर्षः—यथाज्ञापयति देव इति। तथा कृतवति वसुवर्षे माता—(स्वगतम्।) अहो, कुतोऽद्य मे पुत्रस्य भवभोगनिर्भर्त्सनपरासु कामिनीजनसंभावनभङ्गुरारम्भनिर्भरासु च गोष्ठीष्विदं परं मनः। किं नु खलु न महादेवीगेहं गतस्यास्य किमपि वैराग्यकारणमभूत्। ममानिच्छन्त्या एव हि पुत्रेणेयं महति स्वातन्त्र्ये स्थापिता। अतिप्रसक्तं च स्त्रीषु स्वातन्त्र्यं करपत्रमिव पत्युर्नाविदार्य हृदयं विरमति। कथितं च मे खाद्योपायनविनियुक्तया रसायनसिद्धेर्माहानसिकस्य सुतया प्रियंवदया यथा—'अम्बादेवि, तव स्नुषायाः प्रणयपर इव दृश्यते तस्मिन्कुब्जे दृष्टिविनिपातः।' (प्रकाशम्।) वत्स, कथमिव लक्ष्मीविलासहंसाभिनवसमागमसरस्यपि वयसि चतुर्थपुरुषार्थप्रार्थनोत्थासु कथासु गततृष्णमपि सतृष्णमिवाद्य ते प्रतिभाति चेतः। वदनच्छायाप्यन्यथैव

---

भाण्डागारिक, अस्मै सुभाषितवर्षाय वाचकाय पारितोषिकं हर्षदानं वितीर्यतां त्वया दीयताम्। वसुवर्षो भाण्डागारिको ब्रूते—यथा आज्ञापयति देव इति। वसुवर्षे तथा कृतवति पारितोषिकं दत्तवति सति माता स्वगतं चिन्तयति चन्द्रमती चेतसि विचारयति—अहो आश्चर्ये। अद्य अस्मिन् अहनि मे मम पुत्रस्य भवभोगनिर्भर्त्सनपरासु संसारभोगतिरस्करणतत्परासु कामिनीजनसंभावनभङ्गुरारम्भनिर्भरासु च स्त्रीजनानुरागत्वखण्डनारम्भप्रगाढासु च गोष्ठीषु वार्तासु इदं परमुत्कृष्टं मनश्चित्तं कुतः संजातमिति। नु इति वितर्के। महादेवीगेहं गतस्य अस्य मम पुत्रस्य किमपि किंचिद्वैराग्यकारणं विरागत्वहेतुः किं खलु नाभूत् बभूव। मम मे अनिच्छन्त्या एव अनभिलषन्त्या एव हि यस्मात् पुत्रेण यशोधरेण इयममृतमतिर्महति गुर्वी स्वातन्त्र्ये स्वाधीनत्वे स्थापिता कृता। अतिप्रसक्तं अतिप्रसङ्गमागतं स्त्रीषु वनितासु स्वातन्त्र्यं स्वाधीनत्वं पत्युर्भर्तुः हृदयं जीवस्थानमविदार्य अच्छित्वा न विरमति न विश्राम्यति। किमिव। करपत्रमिव क्रकचमिव यथा करपत्रं अविदार्य न विश्राम्यति। कथितं च निरूपितं च मे मम खाद्योपायनविनियुक्तया खाद्यस्य मोदकादिकस्यायने प्राभृते विनियुक्तया अधिकारवत्या रसायनसिद्धिनाम्नो माहानसिकस्य रसवतीपाकस्य सुतया पुत्र्या प्रियंवदया नाम्न्या। किं कथितम्। यथा हे अम्बादेवि, तव स्नुषाया तव पुत्रवध्वा प्रणयपर इव दृश्यते। को दृश्यते। तस्मिन् प्रसिद्धे कुब्जे अष्टवङ्कनाम्नि लेणिकापमर्दे निकृष्टहस्तिपके दृष्टिविनिपातो अवलोकनमिति। प्रकाशमम्बादेवी व्यक्तमुवाच। अम्बादेवी किमुवाचेत्याह—हे वत्स पुत्र, लक्ष्मीविलासहंसाभिनवसमागमसरसि लक्ष्मीविलासो लक्ष्मीभोग एव हंसस्तस्य अभिनवसमागमे सरसि तरोवरप्राप्तेऽपि वयसि यौवने चतुर्थपुरुषार्थे मोक्षस्य प्रार्थने आकाङ्क्षणे उत्था उत्थानं यासु तास्तथोक्तासु देहविषयासु कथासु वार्तासु गततृष्णमपि अभिलाषरहितमपि ते तव चेतो मनोऽद्य इदानीं सतृष्णमिव सतृष्णं कथमिव प्रतिभाति प्रतिभासते मम चमत्कारयति। हे वत्स, ते तव

ते दृश्यते । वपुरपि मलिनं कमलमिवातीव ते विच्छायम् । आशा अपि होमभूमोद्गमा इव तवामरवर्त्म मलिनयन्तो दीर्घतरमायच्छन्ते । लोचने अपि सान्द्रनिद्रोद्रेकदुर्दिने चञ्चुकुलमिव ते मन्दस्पन्दे । महारम्भे सामज इव मुहुर्मुहुरायासमभ्यासि जृम्भितेषु । कर्मणि विनियुक्तस्तुरग इव न स्थिरस्तिष्ठसि चासने । राजा—(स्वगतम् ।) अहो, प्रारम्भे दैवस्य महती खलु कार्यघटनासु तत्परता, मातुश्च मयि सम्भ्रमेषु । (प्रकाशम् ।) अम्ब, विज्ञापयामि स्वोपज्ञपथमुत्थितं कथयामास । मातापि निशम्यैनम्

यातस्त्रिविष्टपमदः समीक्षितुं मतोऽद्य यस्त्वमीस्त्वमिहोदिताचिरम् ।
मही च रत्नाकरपारिमेखला सम भूपालभुवनेन रक्षणात् ॥

---

भवत यदन्यकस्य सुतश्रमापि अन्यर्थयापरगतस्त्री दृश्यते विलोकयने । हे वत्स ते तव वपुरपि　　"　　"　　। हे वत्स तव भवत आशा अपि अपरवर्त्म वृन्तपल्लव मलिनयन्तो भवन्ति भयस्थे दीर्घतरं आयत तरमायच्छन्ते निर्गच्छन्ति । आशा क इव । होमभूमोद्गमा इव होमसंबन्धिपञ्चा-मान्तरप्रादुर्भाव इव । हे वत्स ते तव लोचने अपि सान्द्रनिद्रोद्रेकदुर्दिने इव चञ्चुकुलमिवापि कर्षेन दुर्दिने छदे मन्दस्पन्दे मन्दावलोकने वर्तेते । किमिव । चञ्चुकुलमिव यथा तव चञ्चु भुवं मन्दस्पन्द मन्दप्रसारं वर्तते । हे वत्स मुहुर्मुहु वारं वारं जृम्भितेषु मुखविकासेषु आयासं खेदं अभ्यासि आगच्छसि । क इव । महारम्भे महाकर्मणि सामज इव यथा सामजो गजः जृम्भितेषु आयासमागच्छति । हे वत्स कर्मणि समयादिक्रियायां विनियुक्तोऽपि-स्थ आसने सिंहासने स्थिरो निश्चलो न तिष्ठसि । क इव । तुरग इव अश्ववर इव यथा कर्मणि विनियुक्तस्तुरग आसने स्थिरो न भवति । राजा मनोऽभ्यन्तरे आत्मनं आत्मगतं चिन्तयति । किं चिन्तयति इति चेत्—अहो आश्चर्यम् । प्रारम्भे कार्यघटनासु कार्य-करणेषु दैवस्य कर्मणः खलु निश्चयेन महती गुरुतरा तत्परता एकाग्रता वर्तते । मातुरेव व्याप मयि विषये संभ्रमेषु विस्मयानु महती तत्परता वर्तते । राजा प्रकाशं अन्यग्रहणाय— अम्ब हे मातः, विज्ञापयामि स्वोपज्ञपथं कल्पितस्वप्नमार्गं रचितं स्वप्नोपलम्भं कथयामास कथितवान् । माता चन्द्रमती एनन्तं एनं रचितं स्वप्नं निशम्य श्रुत्वा मां स्वप्नेनमशुभ प्रकारेण अनुभवत् बोधयामास बोधितवती । माता किं कुर्वती । समन्तात् सर्वाङ्गं मनः-क्षिप्य एतानि विभवलक्षणिका विकिरन्ती विविधं वदन्ती । कथं यथा भवत्येवम् । उभयं अपवादितं यथा भवत्येवम् । पुनश्च कथं यथा भवत्येवम् । कोऽपि महदपि तत्सम्भवं यथा भवत्येवम् । पुनश्च कथं यथा भवत्येवम् । साशुकम्पोदयं च दाक्ष्योदयसहितं यथा भवत्येवम् । इत्येवं कथमिति चेत्—

यातस्त्विति । हे पुत्र, मम एतत्स्वप्नदर्शनं त्रिविष्टपं प्रतुयातं समीक्षितुमर्ह

इति समयं सोद्वेगहृदयं सानुकम्पोदयं च समन्तादश्रुविप्रुषो विकिरन्ती मामेवमवबुधत्—पुत्र, सर्वशास्त्रेषु बुधमङ्गविदग्धोऽपि कथं त्वमद्याचारान्ध इवावभाससे । को हि नाम सचेतनः स्वप्नेषु भक्तमुपलभ्य गोणिः प्रसारयति । यदि च नियमेन सत्फला भवन्ति स्वप्नास्तर्हि हतमेतदार्यकस्य त्रियामायां मोदकमन्दमठिकावलोकनादामन्त्रितमहीपतेरुपाख्यानम् । प्राणिनो ह्यनिलानलपीनसान्तरिताः स्वप्नावस्थायामर्थजातं भूतपूर्वमभूतपूर्वं वा निरीक्षन्ते । कथितवती चाधुनैव मे पथि सहागच्छन्तीयं तव धात्रीदुहिता वसन्तिका, यथा—आर्याणि, प्रभातशेषायां निशि स्वप्ने किलाहं यवागूरिव संवृत्तास्मि । भुक्ता च मन्मातुः श्राद्धामन्त्रितैर्भूदेवैरिति ।

---

लोकितु यातु गच्छतु । अयं स्वप्नः शत्रुपक्षे पतत्वित्यर्थः । त्वं भवान् इह अस्मिन् भूमण्डले चिरं दीर्घकालमुदितादुदयं गच्छोदयं प्राप्नुहि । कथंभूतस्त्वम् । प्रतीक्ष्यलक्ष्मीः पूज्यलक्ष्मीकः सन् । रत्नाकरवारिमेखला समुद्रजलमर्यादां महीं च रक्षतात् प्रतिपालय । कथम् । समं सार्धम् । केन समम् । स्नुषानप्तृजनेन स्नुषा च वधूः । 'स्नुषा जनवधूः' इति वचनात् । नप्ता च पुत्रस्य पुत्रः । स्नुषानप्तारौ च तयोर्जनो वर्गस्तेन स्नुषानप्तृजनेन । समुच्चयालंकारः ॥

हे पुत्र, सर्वशास्त्रेषु बुधमङ्गविदग्धोऽपि विचक्षणोऽपि सन् कथं केन प्रकारेण त्वं भवान् अद्य इदानीं आचारान्ध इव मूर्ख इव क्रियामूढ इव अवभाससे चमत्करोषि । नामेति संभावनायाम् । कः पुमान् सचेतनो विचक्षणो हि निश्चयेन स्वप्नेषु भक्तं व्रीहीन् उपलभ्य प्राप्य गोणिः प्रसारयति नटप्रसेवकं धरति । यदि च यदि चेत् नियमेन स्वप्नाः सत्फलाः सत्यफला भवन्ति तर्हि एतज्जगत्प्रसिद्धं आर्यकस्य आचार्यकस्य आचार्यस्य उपाख्यानं दृष्टान्तकथा हतं नष्टं आगतं वा । कथंभूतस्य आर्यकस्य । त्रियामायां रात्रौ मोदकमन्दमठिकावलोकनात् मोदकभृतच्छात्रशालादर्शनात् आमन्त्रितमहीपतेः सपरिवारनिमन्त्रितनृपस्य । हि यस्मात् कारणात् प्राणिनः अनिलानलपीनसान्तरिताः वातपित्तकफसहिताः स्वप्नावस्थायां स्वप्नावसरे अर्थजातं वस्तुसमूहं भूतपूर्वं वा पूर्वसंजातं वा अभूतपूर्वं वा निरीक्षन्ते अवलोकयन्ति । कथितवती च निरूपितवती च अधुनैव इदानीमेव पथि मार्गे मे मम सहागच्छन्ती सममायान्ती इयमेषा तव धात्रीदुहिता भवतः उपमातुः पुत्री वसन्तिकानामधेया, यथा—हे आर्याणि हे स्वामिनि, प्रभातशेषायां निशि पश्चिमरात्रिप्रान्ते । किलेति निश्चयेन । अहं स्वप्ने यवागूरिव उष्णिकेव क्षिप्रपटीव श्राणेव संवृत्तास्मि संजातास्मि । मन्मातुः श्राद्धामन्त्रितैर्मज्जनन्याः श्राद्धकार्ये निमन्त्रितैर्गृहे भूदेवैर्ब्राह्मणैर्भुक्ता चेति बुभुजे ॥

अपि च ।

निष्कण्टकं राज्यमिदं प्रवृद्धमिमे निदेशावहिताश्च भूपाः ।
दिशो दशैतास्तव कामितानि यच्छन्ति चिन्तामणिभिः समानाः ॥
अमूनि पूर्वैर्भवतार्जितानि त्यागाय भोगाय वसूनि सन्ति ।
इच्छाविधेयश्च विलासिनीनामयं गणस्तेऽप्सरसां सदृक्षः ॥
निष्कारणं सर्वमिदं विहाय त्वं केन कामेन तपो हि कुर्याः ।
स्वर्गापवर्गार्थमिदं न सम्यग्दृष्टावदातं खलु किं गरीयः ॥
भवाज्ञया कोऽपि न वर्तते ते तत्रोत्सृज कोपविषं न दोषः ।
भयेन किं मन्मथविसर्पिणीनां कन्यां त्यजन्कोऽपि निरीक्षितोऽसि ॥
दुःस्वप्नशङ्का तव चेदथास्ति सत्त्वैः समस्तैः कुलदेवतायै ।
कृत्वा बलिं शान्तिकपौष्टिकार्थं पश्चान्मतिस्वमविधिं विधेहि ॥

---

अपि च तथा च । निष्कण्टकमिति । हे पुत्र, निष्कण्टकं क्षुद्रशत्रुरहितं इदं एतत् राज्यं प्रवृद्धं वृद्धिं गतम् । इमे भूपाः सामन्ताः निदेशावहिताश्च तवाज्ञापालिनः सावधाना वर्तन्ते । एताः दश दिशः तव भवतः कामितानि वाञ्छितानि यच्छन्ति ददति । कथंभूता दिशः । चिन्तामणिभिः समानाः सदृशाः ॥

अमूनीति । अमूनि एतानि पूर्वैर्वंशोत्पन्नपूर्वपुरुषैर्भवतार्जितानि त्यागाय भोगाय अनुभवनाय वसूनि सन्ति । अयं एष विलासिनीनां कामिनीनां गणः समूहस्ते तव इच्छाविधेयश्च इच्छानुसारी वर्तते । 'विधेयो विनयग्राही' इति वचनात् । कथंभूतो विलासिनीनां गणः । अप्सरसां सदृक्षः रम्भातिलोत्तमामेनकोर्वशीनां सदृशः ॥

निष्कारणमिति । इदं सर्वं पूर्वोक्तं निष्कारणं निष्प्रयोजनं विहाय परिहृत्य त्वं भवान् केन कामेन कैनाभिप्रायेण तपस्तपश्चरणं हि निश्चयेन कुर्याः विदध्याः । इदं एतत् स्वर्गापवर्गार्थं स्वर्गमोक्षनिमित्तं सम्यक् वर्तते । हे पुत्र, इदम् सम्यग्दृष्ट्या अवदातं खलु निश्चयेन किं गरीयः किं गुरुतरं वर्तते । अपि तु न वर्तते । अर्थान्तरन्यासालंकारः, आक्षेपश्च ॥

भयेत्यादि । अथ चेत् हे राजन्, कोऽपि कश्चित् पुमान् ते तव आज्ञया आदेशेन सह न वर्तते नास्ति तत्र तस्मिन् पुरुषे कोपविषं कोपलक्षणं हालाहलं उत्सृज मुञ्च । तत्र कोपे विधीयमाने कोऽपि दोषो नास्ति । हे राजन्, मन्मथविसर्पिणीनां युवतीनां भयेन भीत्या कोऽपि कन्यां दीनमिवात्मनं कथं त्यजन् परिहरन् किं निरीक्षितोऽसि । अपि तु न दृष्टोऽसि । आक्षेपालंकारः ॥

दुःस्वप्नेत्यादि । हे पुत्र, अथ चेत् तव भवतः दुःस्वप्नशङ्का दुःस्वप्नभयमस्ति

यस्मात् 'न धर्मांश्चरेत्, एष्यत्फलत्वात्संशयितत्वाच्च । को ह्यबालिशो हस्तगतं पादगतं कुर्यात् । वरमद्यकपोतः श्वोमयूरात् । वरं सांशयिकान्निष्कादसांशयिकः कार्षापणः' इति महान्खलु लोके लौकायतिकलोककोलाहलः । स चात्मनो गर्भादिमरणपर्यन्तायां सुघट एव । राजा—

सत्यं न धर्मः क्रियते यदि स्याद्गर्भावसानान्तर एव जीवः ।

न चैवम् ।

जातिस्मराणामथ रक्षसां च दृष्टिः परं किं न समस्ति लोके ॥

---

पुत्र, लोके खलु लौकायतिकलोककोलाहलो वादो महान् इत्यस्ति । इतीति किम् । न धर्मांश्चरेत् । कस्मात् धर्मान् न चरेत् । एष्यत्फलत्वात् धर्मचरणे फलं भविष्यद्वर्तते न वर्तमानकाले धर्मचरणफलं दृश्यते । न केवलं एष्यत्फलत्वाद्धर्मान् चरेत्, संशयितत्वात् । न ज्ञायते धर्मचरणे फलं भविष्यति न भविष्यति वा इति देहत्वाच्च धर्मं न चरेदित्यर्थः । अमुमेवार्थं साक्षेपेण द्रढयति—हि यस्मात् कारणात् कः अबालिशः को विद्वान् हस्तगतं वस्तु सुवर्णादिकं पादगतं कुर्यात् । अर्थात् पादाभ्यां गृह्णीयात् । हस्तौ निकटवर्तिनौ वर्तेते, पादौ तु दूरस्थिताविति । तेन दृष्टमेव फलं गृह्णीयात्, अदृष्टं तु परित्यजेत् । वरमितीपद्गुर्चौ । श्वोमयूरात् प्रातर्लभ्यमयूरात् अद्य अस्मिन्नहनि लभ्यः कपोतः पारापतो वरं श्रेष्ठः । मयूरे मांसं महत्, कपोते नातमल्पम् । यस्मात् कारणात् च । वरमितीपद्गुर्चौ । सांशयिकात् संशयभवात् निष्कात् अष्टशतप्रमाणसुवर्णात् अनांशयिकः निश्चितः कार्षापणः गद्याणकमेकं सुवर्णवरश्रेष्ठम् । इति ईदृशो खलु निश्चयेन लोके लोकमध्ये लौकायतिकलोककोलाहलः चार्वाकलोकवादः नास्तिकलोकवादो वा । स चात्मनः च चामाहितो (?) वर्तते । कोऽसौ लौकायतिकलोककोलाहलस्तमेवाह—गर्भादिमरणपर्यन्तायां गर्भादिः शुक्रार्तवजीवसंयोगः, मरणं शरीरेन्द्रियविषयैर्वियोगः, तदन्तायां सुघटः सुघटमान एव वर्तते ॥

राजा प्राह—**सत्यमिति** । सत्यं हे मातः, त्वद्वचनं सत्यम् । धर्मो न क्रियते न विधीयते यदि चेत् जीव आत्मा गर्भावसानान्तरः स्यात् गर्भश्च अवसानं मरणं तयोर्वान्तर एव भवति । न चैवं न च गर्भादिमरणपर्यन्तो जीवो वर्तते । कस्मात् । अमुमेवार्थं वृत्तार्धेन आक्षेपतया द्रढयति—लोके जातिस्मराणां पुरुषाणां परं निश्चयेन दृष्टिः किं न समस्ति । अपि तु समस्त्येव । यदि गर्भादिमरणपर्यन्तो भवति जीवस्तर्हि जातिस्मरः पुमान् कथमेवं वक्ति—अहं पूर्वजन्मनि एवंविधो बभूव । रक्षसां च दृष्टिः कस्यचित् पित्रादिको दृष्ट्वा मृत्वा राक्षसो बभूव प्रेतावासे जन्म गृहीतवानिति श्रूयते । यदि जीवः गर्भादिमरणपर्यन्तस्तर्हि व्यन्तरः कथं संजात

वालस्य मौग्ध्यान्न तपोधिकारो युवा तपस्येद्यदि तत्र दण्डः ।
कुटुम्बभाराधिकृतश्च मध्यो वृद्धः पुनर्वृद्धिसहाय एव ॥
परोपरोधादयमेवमात्मा मिथ्याग्रहग्रस्तमनःप्रतानः ।
स्वयं विजानन्नपि दैवदूतैराकृष्य नीयेत भवभ्रमाय ॥

चरमोऽपि पक्षः श्रेयानेव । द्विधा खलु प्राणिनामापदो भवन्ति—संभवत्प्रतीकाराः, कालकृतावताराश्च । तत्राद्यानामुपशमनाय प्रतिस्वप्नविधिः श्रेयःसंनिधेरेव रणाजिरेपु राजव्यञ्जनव्याजेन द्विपद्विपधराणाममर्पविपवर्पस्य प्रतीकार इव । मध्यमस्तु पक्षोऽतीव मध्यमः ।

---

**वालस्येत्यादि** । हे मात', वालस्य शिशोस्तपोधिकारो दीक्षाग्रहणनियोगो न वर्तते । कस्मात् । मौग्ध्यात् मुग्धस्वभावात् । यदि चेत् युवा तरुणस्तपस्येत् तप. कुर्यात् तत्र तप करणे दण्ड. प्रायश्चित्त वर्तते वपुर्दण्डन कष्ट वा भवति । मध्य. अर्धवृद्ध. पुमास्तु कुटुम्बभाराधिकृतो भवति कुटुम्बोदरपूरण करोति । पुनः पश्चात् वृद्धो वर्षीयान् वृद्धिसहाय एव कालान्तरेणोदरं पूरयति । जात्यलकारः । तथा चोक्त गुणभद्रेण महाकविना—'बाल्ये वेत्सि न किंचिदप्यपरिपूर्णाङ्गो हितं वाहित कामान्ध. खलु कामिनीद्रुमघने भ्राम्यन्वने यौवने । मध्ये वृद्धतृपार्जितु वसुपशु क्लिश्नासि कृष्यादिभिः वार्धेवार्धमृत. क जन्मफलिते धर्मो भवेन्निर्मल ॥' इति ॥

**परोपरोधादित्यादि** । परोपरोधात् मातृपित्रादि आक्षेपात् अय आत्मा एप जीवो मिथ्याग्रहग्रस्तमन प्रतानो मिथ्याग्रहोऽसत्यपिशाचग्रहस्तेन ग्रस्तो गृहीतो मन प्रतानो मनोव्यापारो यस्य स तथोक्तः वर्तते । स्वयमात्मना विजानन्नपि विशेषेण चेतन्नपि दैवदूतै कृतान्तकिंकरैराकृष्य तान् नयित्वा भवभ्रमाय ससारपर्यटनाय नीयेत नीयते ॥

चरमोऽपि पक्ष शान्तिकपौष्टिकादिलक्षण श्रेयानेव शुभ एव वर्तते । पर प्रणिपातेन न श्रेयानित्यर्थ । हे मात , द्विधा खलु प्राणिना आपदो विपत्तयो भवन्ति । कौ तौ द्वौ प्रकारौ । सभवत्प्रतीकारा आसन्नापदा प्रतीकारा , कालकृतावताराश्च कृतान्तकृतोत्पत्तयश्च । तत्र तयोर्मध्ये आद्याना सभवत्प्रतीकाराणा आपदा उपशमनाय प्रतिस्वप्नविधि श्रेय सनिधेरेव पुण्याचरणादिव भवति । प्रतिस्वप्नविधिः क इव । रणाजिरेपु सग्रामाङ्गणेपु राजव्यजनव्याजेन द्विपद्विपधराणा शत्रुसर्पाणा अमर्पविपवर्पस्य क्रोधविपवर्पणस्य प्रतीकार इव विद्याधरभेपजमन्त्रतोयहवनादिप्रतीकार इव । मध्यमस्तु पक्ष' स्वप्रशङ्का इत्यादि यत्पठितं स अतीव मध्यम' निकृष्ट' ॥

अहोरात्रं यथा हेतु प्रकाशध्वान्तजन्मनि ।
तथा महीपतिर्हेतु पुण्यपापप्रवर्तने ॥

उक्तं च—

राज्ञि धर्मिणि धर्मिष्ठाः पापे पापाः समे समाः ।
राजानमनुवर्तन्ते यथा राजा तथा प्रजाः ॥

इति । भूतसंरक्षणं हि क्षत्रियाणां महान्धर्मः । स च निरपराधप्राणिवधे नितरां निराकृतः स्यात् । नृपतिप्रतिष्ठानि च खलु देहिनां व्यवहारतन्त्राणि वर्तन्ते । नृपस्यायत्ताः पुण्यपापहेतवो वर्णाश्रमाणामाचारव्यवस्थाश्च । ते च नृपतयः कामक्रोधाभ्यामज्ञानेन वा यथैव शुभमशुभं वा कर्मारभन्ते तथैव जानपदा अपि । श्रूयते हि—यष्टीमण्डले नृपतिकोपाद्रूपे-

---

अह इति । अहश्च रात्रिश्च अहोरात्रम् । 'अहः सर्वैकदेशसंख्यातपुण्याच्च रात्रेः' इत्यनेन तत्पुरुषे अजन्तो निपातः । यथा येन प्रकारेण हेतुः कारणं वर्तते । कस्मिन् । प्रकाशध्वान्तजन्मनि प्रकाशे प्रकाशोत्पादे अहर्दिवसो हेतुः वर्तते ध्वान्तजन्मनि अन्धकारोत्पादे रात्रिर्हेतुर्वर्तते । तथा तेन प्रकारेण महीपती राजा हेतुः कारणं वर्तते । कस्मिन् । पुण्यपापप्रवर्तने पुण्यस्य प्रवर्तने पापस्य च प्रवर्तने ॥

उक्तं च—पूर्वभाषितं वर्तते चाणक्यसूत्रमित्यर्थः । राज्ञीत्यादि । राज्ञि राजनि धर्मिणि धर्मिष्ठे सति प्रजा धर्मिष्ठा भवन्ति । पापे पापिष्ठे राजनि सति पापाः प्रजाः अपि पापिष्ठा भवन्ति । समे समाने मध्यस्थे राजनि प्रजा अपि समा मध्यस्था भवन्ति । प्रजा राजानमनुवर्तन्ते राजानं छन्दानुसारिण्यो भवन्ति । यथा राजा यादृशो राजा तथा प्रजा प्रजा अपि तादृश्यो भवन्ति ॥

हे मातः, भूतसंरक्षणं प्राणिनां प्रतिपालनं हि निश्चयेन क्षत्रियाणां राजपुत्राणां महान् गुरुतरो धर्मो वर्तते । स च धर्मो निरपराधप्राणिवधे निर्दोषजन्तुमारणे नितरां अतिशयेन निराकृतो निषिद्धः स्याद्भवेत् । नृपतिप्रतिष्ठानि च राजायत्तानि च खलु निश्चयेन देहिनां प्राणिनां व्यवहारतन्त्राणि व्यवहाराधीनानि क्रयविक्रयादिरूपाणि वर्तन्ते सन्ति । नृपस्यायत्ताः राजाधीनाः पुण्यपापहेतवः पुण्यपापकारणानि वर्णाश्रमाणां ब्राह्मणक्षत्रियवैश्यशूद्र-ब्रह्मचारिगृहस्थवानप्रस्थभिक्षूणां च आचारः आचरणं व्यवस्था मर्यादाश्च वर्तन्ते । ते च नृपतयः कामक्रोधाभ्यां कामेन क्रोधेन अज्ञानेन वा अज्ञानतया वा यथैव येनैव प्रकारेण शुभमशुभं वा पुण्यपापं वा कर्म आरभन्ते कुर्वन्ति तथैव तेनैव नृपतिप्रकारेणैव जानपदा अपि लोका अपि आरभन्ते । श्रूयते हि आकर्ण्यते हि—यस्मात् यष्टीमण्डले

ष्वासवोपयोगः, पारसीकेषु स्वसचित्रीसंयोगः, सिंहलेषु च विश्वामित्रसृष्टिप्रयोग इति । ततश्च ।

यथैव पुण्यस्य सुकर्मभाजां षष्ठांशभागी नृपतिः सुवृत्तः ।
तथैव पापस्य कुकर्मभाजां षष्ठांशभागी नृपतिः कुवृत्तः ॥

अपि च ।

यः शस्त्रवृत्तिः समरे रिपुः स्याद्यः कण्टको वा निजमण्डलस्य ।
अस्त्राणि तत्रैव नृपाः क्षिपन्ति न दीनकानीनशुभाशयेषु ॥

तन्मातः, अहमैहिकामुत्रिकचरित्रानपत्रपस्तेषु प्राणिषु कथं नाम अस्त्रं प्रयोजयामि । किं च ।

न कुर्वीत स्वयं हिंसां प्रवृत्तां च निवारयेत् ।
जीवितं बलमारोग्यं शश्वद्वाञ्छन्महीपतिः ॥

---

रत्नपुरपतने नृपतिदोषात् राजदोषात् भूदेवेषु ब्राह्मणेषु आसवोपयोग मद्यपानम् । तथा नृपतिदोषात् पारसीकेषु राश्वानदेशेषु स्वसचित्रीसंयोग. ........................ । तथा नृपतिदोषात् सिंहलेषु च विश्वामित्रसृष्टिप्रयोग. श्रूयते वर्णसकर आकर्ण्यते इति ॥

ततस्तस्मात् कारणात् । **यथेत्यादि** । यथैव येन प्रकारेण सुकर्मभाजा पुण्यकर्मणा लोकानां सुवृत्तो नृपति सदाचारो राजा पुण्यस्य षष्ठांशभागी भवति, तथैव तेनैव प्रकारेण कुकर्मभाजा पापकर्मणा लोकाना कुवृत्तो नृपति. दुराचारो राजा पापस्य षष्ठाशभागी भवति ॥

अपि च तथा च । **य इत्यादि** । यो रिपु शत्रु समरे सग्रामे शस्त्रवृत्तिरायुधवान् स्यात् भवति । तथा च अथ वा निजमण्डलस्य निजदेशस्य यः कण्टको धात्र्यादिदायक. भवति । तत्रैव शत्रौ नृपा राजानो अस्त्राणि क्षिपन्ति मुञ्चन्ति । न दीनकानीनशुभाशयेषु दीनेषु दुर्बलेषु कानीनेषु अकिंचित्करेषु शुभाशयेषु यतिवर्गादिषु अस्त्राणि न मुञ्चन्ति ॥

तत्तस्मात् कारणात् हे मात , अह ऐहिकामुत्रिकचरित्रानपत्रप इहलोकपरलोकाचरणे अनपत्रप' अविद्ध' सन् तेषु प्राणिषु दीनादिषु निरपराधेषु । नामेति सभावनायाम् । कथ केन प्रकारेण अस्त्र खड्गादिक प्रयोजयामि व्यापारयामि । अपि न कथमपीत्यर्थः ॥

किं च । मनाग्विशेष कथयामि—**नेति** । महीपती राजा स्वय आत्मना हिंसा प्राणिघात न कुर्वीत न कुर्यात् । प्रवृत्ता च अपरै. कृतां हिंसा निवारयेत् निषेधयेत् । महीपति किं कुर्वन् । जीवित दीर्घायुष्क बल शरीरस्य सामर्थ्यं आरोग्य शश्वन्निरन्तरं वाञ्छन्नभिलपन् ॥

यो दद्यात्काञ्चनं मेरुं कृत्स्नां चापि वसुन्धराम् ।
एकस्य जीवितं दद्यात्फलेन न समं भवेत् ॥
यथात्मनि शरीरस्य दुःखं नेच्छन्ति जन्तवः ।
तथा यदि परस्यापि न दुःखं तेषु जायते ॥

इति श्लोकत्रयं गतवत्येव दिने हिरण्यगर्भस्य मन्त्रिणः सुखेन नीतिबृहस्पतिना मामप्यापतितवती भवत्येव । कथं मामपि स्मृता । विधेयमेव चाशुभमपि कर्म । को दोषो यदि दुष्प्रमादस्येवास्मनो न भवेयुः सुखस्याप्यापदि विजृम्भितानि ।

संतर्पणार्थं द्विजदेवतानां पुष्ट्यर्थमन्नस्य च सन्त्युपायाः ।
अन्येऽपि लोके बहवः प्रशस्ताः सन्तः कुतः पापमिदाचरन्ति ॥
शुक्रशोणितसंभूतमशुचीनां निकेतनम् ।
मांसं चेत्तीर्थमेवैतद्व्याघ्रानुपास्महे ॥

---

य इति । यः पुमान् मेरुमपि कनकं दद्यात् ददाति । कृत्स्नां चापि वसुमतीं दद्यात् । एकस्य जीवितमभयदानं दद्यात् । स पुमान् फलेन कृत्वा समं न भवेत् । जीवितदानस्य अधिकत्वं प्रत्युपादितम् ॥

यथेति । यथा येन प्रकारेण आत्मनि शरीरस्य दुःखं जन्तवो जीवा नेच्छन्ति, तथा तेन प्रकारेण यदि चेत् परस्यापि अन्यस्यापि जीवस्य यदि दुःखं नेच्छन्ति तर्हि तेषु जीवेषु दुःखागमनं न जायते नैरपराध्ये ॥

इति पुनः श्लोकत्रयं पठितवत्येव तस्मिन् दिने हिरण्यगर्भस्य नाम्नो मन्त्रिणः सुखेन नीतिबृहस्पतिना मां कस्मिन्नेव समये आपतितवती अभवत् । कथं केन प्रकारेण । मामपि स्मृतवान् । विस्मृता विस्मृतवती । विधेयमेव कर्तव्यमेव च अशुभमपि कर्म पापकं कर्तव्यम् । का दोषो वर्तते । नहि नु न कोऽपि । यदि चेत् दुष्प्रमादस्येव सर्वप्रमादस्येव आत्मनो निरपराधस्य न भवेयुः जायन्ते । तर्हि न भवन्ति । आपदि आपत्तौ सुखस्यापि दुःखानि विजृम्भितानि प्रादुर्भवन्ति ॥

संतर्पणार्थमित्यादि । द्विजदेवतानां ब्राह्मणदेवतादीनां संतर्पणार्थं प्रीणनार्थम् अन्नस्य च पुष्ट्यर्थं, अन्येऽपि उपायान्तराणि बहवः सन्ति प्रशस्ताः प्रशंसनीया लोके लोकमध्ये उपायाः सन्ति वर्तन्ते । तर्हि हे सन्तः सत्पुरुषाः कुतः कस्मात् कारणात् पापं हिंसादि कर्म इदं अस्मिन् संसारे आचरन्ति कुर्वन्ति ॥

शुक्रेति । हे सन्तः चेत् यदि मांसं शुक्रशोणितसंभूतं तीर्थमेवैतत् तर्हि व्याघ्रान् उपास्महे । अशुचीनां निकेतनम् ।

गोब्राह्मणस्त्रीमुनिदेवतानां विचारयेत्कश्चरितं विपश्चित् ।
श्रुतिस्मृतीहासपुराणवाचस्त्यजात्मना चेन्न तवास्ति कार्यम् ॥
न कापि पुंसः पुरुषार्थसिद्धिः सूक्ष्मेक्षयातीवपरीक्षकस्य ।
जगत्प्रवाहेण तु वर्तितव्यं महाजनो येन गतः स पन्थाः ॥
विलासिनीविभ्रमदर्पणानि कंदर्पसंतर्पणकारणानि ।
क्रियाश्रमच्छेदकराणि हातुं मधूनि को नाम सुधीर्यतेत ॥
मताः समा मन्मथतत्त्वविद्भिर्मृताः स्त्रियो मद्यविवर्जिताश्च ।
ये भुञ्जते मांसरसेन हीनं ते भुञ्जते किं नु न गोमयेन ॥

यदि च मधुमांसनिषेवणे महादोषस्तदा कथमेतन्महर्षिभिरुदाहृतम्—

---

**गोब्राह्मणेत्यादि** । गावश्च ब्राह्मणाश्च स्त्रियश्च मुनयश्च गौतमाद्यो देवताश्च विष्णु-आदयो गोब्राह्मणस्त्रीमुनिदेवतास्तासां चरितमाचारं को विपश्चित् विचारयेत्परीक्षेत । अपि तु न कश्चिद्विपश्चिद्विचारयेदित्यर्थः । हे पुत्र, श्रुतिस्मृतीतिहासपुराणवाचः श्रुतिः वेदः, स्मृतिः धर्मशास्त्रम्, इतिहासः इतिवृत्तम्, पुराणानि रामायणमहाभारतादीनि। वचनानि त्यज पुत्र चेद्यदि आत्मना जीवेन सह तव कार्यं नास्ति । जीवार्थी चेत्तर्हि मा त्यज ॥

**न कापीत्यादि** । हे पुत्र, पुंसः पुरुषस्य कापि काचिदपि पुरुषार्थसिद्धिर्न भवति । कथंभूतस्य पुंसः । सूक्ष्मेक्षया सूक्ष्मदृष्ट्या कृत्वा अतीवपरीक्षकस्य । जगत्प्रवाहेण तु लोकमार्गेण तु वर्तितव्यं वर्तनीयम् । येन यथा मार्गेण महाजनो गतः महान् लोकः प्रवृत्तः स पन्थाः स एव मार्गः । अर्थान्तरन्यासालंकारः ॥

**विलासिनीत्यादि** । हे पुत्रक, सुधीः पुमान् । नामेति संभावनायाम् । मधूनि मद्यादीनि हातुं परिहर्तुं को यतेत यत्नं कुर्यात् । अपि तु न कश्चित् परिहरेदित्यर्थः । कथंभूतानि मधूनि । विलासिनीविभ्रमदर्पणानि विलासिनीनामुत्तमस्त्रीणां विभ्रमाणां अवलोकने दर्पणानि आदर्शसदृशानि । पुनः कथंभूतानि । कंदर्पस्य कामोद्रेकस्य संतर्पणे समुद्दीपने कारणानि हेतुभूतानि । पुनः कथंभूतानि । क्रियाश्रमच्छेदकराणि क्रियाणां सुरतक्रियादीनां श्रमस्य छेदकराणि । आक्षेपालंकारः ॥

**मता इत्यादि** । हे पुत्र, मृता स्त्रियो मद्यनिर्वर्जिताश्चापि समा मताः । कैः । मन्मथतत्त्वविद्भिः कामशास्त्ररहस्यविचक्षणैः पुरुषैः । हे पुत्र, मांसरसेन हीनं ये भुञ्जते भोजनं कुर्वते पुरुषाः । नु इति वितर्के । गोमयेन सह गोविष्ठया सह किं न भुञ्जते । अपि तु गोविष्ठासहितं भोजनं कुर्वन्तीत्यर्थः । उपमालंकारः ॥

यदि च यदि चेत् मधुमांसनिषेवणे महादोषो वर्तते, तदा तस्मिन् काले एतद्वचनं महर्षिभिः कथं उदाहृतं प्रोक्तम् ॥

'न मांसभक्षणे दोषो न मद्ये न च मैथुने।
प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफलम् ॥' इति।

कथं च हव्यकव्यविधिषु प्रबन्धेन तद्ग्रहणम्। तत्राह—

'तिलैर्व्रीहियवैर्माषैरद्भिर्मूलफलेन च।
दत्तेन मांसं प्रीयन्ते विधिवत्पितरो नृणाम् ॥
द्वौ मासौ मत्स्यमांसेन त्रीन्मासान्हारिणेन च।
औरभ्रेणाथ चतुरः शाकुनेनैव पञ्च वै ॥
षण्मासांश्छागमांसेन पार्षतेन हि सप्त वै।
अष्टावैणस्य मांसेन रौरवेण नवैव तु ॥
दश मासांस्तु तृप्यन्ति वराहमहिषामिषैः।
शशकूर्मस्य मांसेन मासानेकादशैव तु ॥

---

एतस्मिन्—नेत्यादि। मांसभक्षणे दोषः पापं न वर्तते, न च मद्ये दोषो वर्तते, न चैव मैथुने दोषो वर्तते। किं तर्हि। भूतानां प्रवृत्तिरेव भवति, निवृत्तेस्तु मद्यमांसनिषेधात् महत्फलं भवति॥

कथं च केन प्रकारेण हव्यकव्यविधिषु देवे पित्रर्थविधानेषु प्रबन्धेन ग्रन्थेन कृत्वा तद्ग्रहणं मांसभक्षणं वर्तते। तत्राह तदेव निरूपयति—तिलैरित्यादि।

.. .. .. ..

.. .. .. .. .. .. ..

.. .. ॥

द्वौ मासावित्यादि। द्वौ मासौ यावत् मत्स्यमांसेन मीनामिषेण पितरस्तृप्यन्ति। त्रीन् मासान् मृगविशेषमात्रात्म (?) हारिणेन हरिणमांसेन पितरस्तृप्यन्ति। अथानन्तर औरभ्रेण मेषमांसेन चतुरो मासान् पितरस्तृप्यन्ति। शाकुनेनैव पक्षिमांसेनैव पञ्च मासान् पितरस्तृप्यन्ति॥

षडित्यादि। वै निश्चयेन। छागमांसेन षण्मासान् पितरस्तृप्यन्ति। पार्षतेन पृषतिमृगमांसेन सप्त मासान् पितरस्तृप्यन्ति। ऐणस्य। हि निश्चयेन। वै इति पादपूरणे। अष्टौ मासान् एणमांसेन कस्तूरीमृगमांसेन पितरस्तृप्यन्ति। रौरवेण रुरुमृगेण नवैव मासान् पितरस्तृप्यन्ति॥

दशेत्यादि। वराहमहिषामिषैः शूकरमहिषमांसैस्तु दश मासान् पितरस्तृप्यन्ति। शशकूर्मस्य मांसेन शशकच्छपमांसेन एकादशैव मासान् पितरस्तृप्यन्ति॥

संवत्सरं तु गव्येन पयसा पायसेन वा।
वार्ध्रीणसस्य मांसेन तृप्तिर्द्वादशवार्षिकी॥' इति।

राजा—(स्वगतम्।)

ऐश्वर्यमेकं तिमिरं नराणामेवंविधो बन्धुगणो द्वितीयम्।
किं नाम पापं न करोतु जन्तुर्मदेन मोहेन च निर्विचारः॥
श्रियां मनोदर्पकरैर्विलासैरापातरम्यैश्च विलासिनीनाम्।
प्रतारितान्तःकरणो दुरन्तां भवाटवीमेष विशत्यवश्यम्॥
बलादमीभिर्विपर्यैर्वराकः प्रायेण जानन्नपि मोहितात्मा।
मृत्योः पुरीवारिविहारभाजां वन्यः करीवास्पदमापदां स्यात्॥

(प्रकाशम्।)

नान्येषु पापं मनसा विचिन्त्यं साक्षात्स्वयं तत्क्रियते मयाद्य।
त्वया श्रुता किं नु कथा न लोके सशालिशिक्थस्य वसोः प्रसिद्धा॥

---

**संवत्सरमित्यादि**। गव्येन पयसा गोदुग्धेन पायसेन वा संवत्सर पितरस्तृप्यन्ति। वार्ध्राणसस्य गण्डकस्य मांसेन द्वादशवार्षिकी तृप्तिर्भवति॥

राजा श्रीयशोधरः स्वगत आत्मगत चिन्तयति—**ऐश्वर्यमित्यादि**। ऐश्वर्य नार्पत एक तावत् नराणां तिमिरमन्धकार वर्तते। एवविधो मात्रादिलक्षणो बन्धुगणो बन्धुवर्गो द्वितीय तिमिरं वर्तते। नामेति सभावनायाम। जन्तु किं पापं न करोतु। अपि तु सर्वपाप करोत्वित्यर्थ.। कथभूतो जन्तु.। मदेनैश्वर्यगर्वेण मोहेन च एवविधबन्धुवर्गमोहेन कर्मणा निर्विचारो निर्विवेक। यथासंख्याक्षेपालकार॥

**श्रियामित्यादि**। श्रियां लक्ष्म्या सत्ता विलासिनीना विलासैर्नेत्रदर्शामाभि प्रतारितान्त.करणो वञ्चितमना एष जन्तुरवश्य निश्चयेन दुरन्तां दुष्टस्वभावा भवाटवीं विशति प्रवेश करोति। कथभूतैर्विलासै.। मनोदर्पकरै. हृदयमदजनकै.। पुनः कथभूत.। आपातरम्यै. प्रथमप्रारम्भे रम्यैः। रूपकालकार॥

**बलादित्यादि**। अमीभिरेतैर्विपर्यैरिष्टस्रग्वनिताचन्दनादिभि कारणभूतैर्मोहितात्मा परेष जन्तुर्वराको वर्पटक प्रायेण जानन्नपि विदन्नपि बलात् आपदामास्पद स्यात। क इव। वने भवो वन्य करीव। यथा वन्यः करी मृत्यो पुरीवारिविहारभाजा मरणस्य नगरीविहारवतां करिधरणस्थान वारिरुच्यते। तद्विहारजोऽजमास्पद स्यात्। रूपकदृष्टान्तालकारः॥

प्रकाशम्। यशोधरो राजा सर्वं स्फुटमुक्तवान्॥

**नान्येष्वित्यादि**। हे मात., अन्येषु जीवेषु पापं तल्लक्षणं मनसा न विचिन्त्य नो विचिन्तनीयम्। तत्पाप अद्य इदानीं मया यशोधरेण साक्षात्प्रत्यक्षेण कथ क्रियते। कर्तुं न

परस्य जीवेन यदि स्वरक्षा पूर्वे क्षितीशाः कुत एव मग्नाः।
शास्त्रं तु सर्वत्र यदि प्रमाणं श्वकाकमासेऽपि भवेत्प्रवृत्तिः॥
भवन्नकृत्यावहितो हि लोकः कदापि नेदं जगदेकमार्गम्।
यद्धर्मबुद्ध्या विदधाति पापं तन्मे मनोऽतीव दुनोति मातः॥
लोके विनिन्द्यं परदारकर्म मात्रा सहैतत्किमु कोऽपि कुर्यात्।
मांसं जिघत्सेद्यदि कोऽपि लोलः किमागमस्तत्र निदर्शनीयः॥
लोलेन्द्रियैर्लोकमनोनुकूलैः स्वाजीवनायागम एष सृष्टः।
स्वर्गो यदि स्यात्पशुहिंसकानां सूनाकृतां तर्हि भवेत्स कामम्॥
मन्त्रेण शस्त्रैर्गलपीडनाद्वा वेद्यां बहिश्चापि वधः समानः।
स्वर्गो यदि स्यान्मखहिंसितानां स्वबान्धवैर्यज्ञविधिर्न किं तु॥

---

**परस्येत्यादि**। परस्य गजवाज्यनादिजीवगणस्य जीवेन यदि चेत् स्वरक्षा भवति तर्हि पूर्वे चिरतना. क्षितीशा कुत एव कस्माद्देव मग्नर्मृताः। यदि चेत् शास्त्र तु सर्वत्र प्रमाण भवति तर्हि श्वकाकमासेऽपि प्रवृत्तिर्भवेत्। जात्यलकार. ॥

**भवन्नित्यादि**। हे मात, लोकोऽकृत्यावहित पापकर्मणि सावधानो भवन् सजायमानो वर्तते। इद जगत् कदापि कस्मिंश्चिदप्यवसरे एकमार्गमेकमताश्रित न भवति। कथम्। हि निश्चयेन। यल्लोको धर्मबुद्ध्या पाप विदधाति तन्मे मम मनोऽतीव दुनोति उपताप प्राप्नोति। जातिरियम्॥

**लोक इत्यादि**। परदारकर्म परस्त्रीभोगो लोके जगति विनिन्द्य विशेषेण गर्हणीय वर्तते। एतत्परदारकर्म मात्रा सह जनन्या सह कोऽपि किमु कुर्यात्। अपि तु न कुर्यादित्यर्थः। यदि चेत् कोऽपि कश्चित् पुरुष लोलो जिह्वालम्पटो मास जिघत्सेत् खादितुमिच्छेत् तत्र तस्मिन् मासभक्षणे आगम. सिद्धान्त. वेदशास्त्र किं किमर्थं निदर्शनीय.। अपि तु नोदाहर्तव्यमित्यर्थ। आक्षेपालकार॥

**लोलेत्यादि**। लोलेन्द्रियैरिन्द्रियलम्पटै. लोकमनोनुकूलैर्यथालोकचित्तमनुलापुर्करेपोऽय आगमो वेदसिद्धान्त. स्वाजीवनाय निजविपयपोपणाय सृष्टो रचित.। यदि चेत् पशुहिंसकाना गजवाज्यब्राह्मणादियजकर्मणि वधकाना स्वर्ग स्यात् संजायते तर्हि स स्वर्ग. काममतिशये सूनाकृता खाटकिनां भवेत् सजायेत। आक्षेपालकार॥

**मन्त्रेणेत्यादि**। मन्त्रेण अथर्वणमन्त्रेण सहिता वाक्येन वा शस्त्रैर्गलपीडनात् कण्ठमोटनाद्वा वेद्या प्रालम्भनकुण्डे बहिश्चापि यागमण्डपबाह्ये वा वधो जीवघात. समानः सदृशपापो वर्तते। यदि चेत् मखहिंसिताना यज्ञे वषट्कृताना पशूना स्वर्ग. स्यात् त्रिद-

विधायापवर्त्य च तं पुरुषमारभटेशीयं शिष्यमादिशति—'अहो कुशिक वत्स, वलीयानयमजास्तनंधयः । तदतियत्नमुपसंव्यानेन बद्धानीयतामुदवसितम् । अहमप्येष तवानुपदमेवागच्छामि ।' तथाचरति तच्छिष्ये स वसुधायां कुलिशकीलित इव निषण्णः संभूय सर्वैरपि तदन्तेवासिभिरुत्थापयितुमशक्यः 'प्रीयन्तामत्रैवास्य चेटस्य मांसेन विधिपूर्वकं देवाः पितरो ब्राह्मणाश्च' इत्यालापोल्वणरुषममर्षविषोन्मेषकलुषचक्षुषमाशु स्वयमेव वधायोद्धृतपर्वताकारपाषाणपरुषं स छगलस्तमुपाध्यायं मनुष्यवद्भाषे—'ननु भट्टस्य किमर्थो महानेष प्रयासः' इति । भट्टः सभयः सविस्मयश्च प्रत्याचष्ट—'महापुरुष, तव स्वर्गगमनाय' इति । छागः—'अन्ये खलु ते वराकतनवः पशवो ये मखमिषेण भवता भक्षिताः । अत्र तु प्रस्तरप्रतिमाकवलन इव केवलं दन्तभङ्गस्तव' इति विचिन्त्य किंचिद्विहस्य च स्वस्तमस्तं (?) पुनरेवमवोचत्—

---

था विधाय मुद्रिका दत्त्वा अपवर्त्य च प्रस्थाप्य च तं पुरुषं आरभटः आत्मदेशीय आत्मनो मनागून शिष्यमादिशति—अहो कुशिकनामन् । वत्सेति कोमलालापे । वलीयानयं अजास्तनंधयः । तत्तस्मात् कारणात् अतियत्नं यथा भवत्येवं उपसंव्यानेन उत्तरीयवस्त्रेण बद्धा स्वयम्यानीयतां उदवसितं मम गृहम् । अहमपि एष तवानुपदमेव भवतः पश्चादेव आगच्छामि । आगमिष्यामीत्यर्थः । तच्छिष्ये तथा आचरति सति बद्धा आनयति सति स छागो वसुधायां कुलिशकीलित इव निषण्णः संभूय मिलित्वा सर्वैरपि सार्धपञ्चशतैरपि तदन्तेवासिभिः अन्तेवासिभिरुत्थापयितुमशक्यः न शक्यते । प्रीयन्तां प्रीतिं प्राप्नुवन्तु अत्रैव अस्य छागस्य चेटस्य दासस्य मांसेन विधिपूर्वकं वेदोक्तविधिना देवाः सवित्रादयः पितरः ब्राह्मणाश्च इत्यालापैरुल्वणरुषमुत्कटक्रोधं यथा भवत्येवं अमर्षविषोन्मेषकलुषचक्षुषं अमर्ष एव विषं तस्योन्मेषेण प्रादुर्भावेण कलुषे आरक्ते चक्षुषी यस्य भट्टस्य स तथा तम् । आशु स्वयमेव वधाय उद्धृता उत्पाटिता पर्वताकारा पाषाणास्तैः परुषः कर्कशो यो भट्टः स तथा तम् । स पूर्वोक्तश्छगलस्तमुपाध्यायं मनुष्यवद्भाषे उक्तवान्—नन्वहो, भट्टस्य किमर्थः केन कारणेन महान् एषोऽयं प्रयास इत्युवाच । भट्टो मनुष्यवद्वदन्तं छागं दृष्ट्वा सभयः सविस्मयश्च प्रत्याचष्ट प्रत्युवाच—हे महापुरुष, तव भवतः स्वर्गगमनाय प्रयाणाय मम प्रयास इत्युवाच । छागो मनसि चिन्तयति—अन्ये पशवः खलु ते भवन्ति वराकतनवो अकिंचित्करशरीरा ये पशवो मखमिषेण भवता भक्षिताः । अत्र तु मयि विषये प्रस्तरप्रतिमाकवलने बिम्बचर्वणे इव केवलं तव दन्तभङ्गो भविष्यति । इति विचिन्त्य किंचिन्मनाग् विहस्य च स्वस्तमस्त(?) भट्टं प्रति पुनरेव वक्ष्यमाणलक्षणोपलक्षितप्रकारेण अवोचत् जगाद ॥

वाहपतितः पादप इव न चिरं नन्दति। स्त्री तु पुरुषमुष्टिस्थिता खड्गयष्टिरिव साधयत्यभिमतमर्थम्। अभिनिवेशं च पुनः पापपुण्यक्रियासु प्रधानं निधानमामनन्ति मनीषिणः। बाह्यानीन्द्रियाणि तपनतेजांसीव शुभेष्वशुभेषु च वस्तुषु समं विनिपतन्ति। न चैतावता भवति तदधिष्ठातुः कुशलेन चादृष्टेन संबन्धः। संकल्पोपपन्नप्रतिष्ठानि च देवसायुज्यभाञ्जि शिलाशकलानि किमत्यासादयन् पुरुषो न भवति लोके महापञ्चपातकी। सकृदेव चाशुभसंकल्पमलिने मनसि दुरपवादकलुषिते सत्पुरुषचेतसीव दुर्लभाः खलु पुनस्तत्प्रसन्नतायामुपायाः। चिरेणापि च कालेन कृतः कल्याणकर्मणां प्रचयः प्रमादवशेन सकृदपि संजातविधिर्दुरभिसंधिः पावकनिक्षेपात्प्रासाद इव क्षणेन विनश्यत्यामूलतः। संकल्पेन

---

तथा नारीननसोऽपि। यद्यस्मात्कारणात् पुरुषोऽपि गृहकार्यात्पाकादिकर्मतोऽन्यत्र स्त्रियं प्रमाण न चिरं नन्दति। किं तु भोजनादिसमये पाकादिकर्मण्येव प्रमाणमङ्गीकरोति। क इव। नदीप्रवाहपतितः नद्याः प्रवाहे पतितः पादपो वृक्ष इव। यथा नदीप्रवाहे पतितः पादपो न चिरं नन्दति शोभते स्थिरो भवति। स्त्री तु पुरुषमुष्टिस्थिता पुरुषस्य मुष्टौ स्थिता पुरुषपरतन्त्रा सती अभिमतमर्थं साधयति। केव। खड्गयष्टिरिव उत्तमः खड्ग इव। कीदृक्। पुरुषमुष्टिस्थिता पुरुषस्य मुष्टौ स्थिता। न तु भीरोः क्लीबस्य वा मुष्टौ स्थिता। मनीषिणः पण्डिताः पुनरभिनिवेशमासक्तिमेव पापपुण्यक्रियासु प्रधानं मुख्यं निधानं स्थानम् आमनन्ति वर्णयन्ति। बाह्यानि चक्षुरादीनि इन्द्रियाणि शुभेषु पुण्यजनकेषु अशुभेषु पापजनकेषु च वस्तुषु कर्मसु तपनतेजांसीव सूर्यातपा इव समं युगपत् विनिपतन्ति प्रवर्तन्ते। न च एतावता दर्शनादिमात्रेण तदधिष्ठातुः दर्शनस्पर्शनादिकर्तुः पुरुषस्य कुशलेन पुण्येन चान्यत् अदृष्टेन पापेन संबन्धो भवति। संकल्पोपपन्नप्रतिष्ठानि च संकल्पेन प्राप्तप्रतिष्ठाकर्माणि शिलाशकलानि पाषाणखण्डानि देवसायुज्यभाञ्जि देवतासाम्यप्राप्तानि अत्यासादयन् आसादनां कुर्वन् पुरुषो मनुष्यः किं न भवति लोके महापञ्चपातकी। अपि तु भवत्येव। उक्तं च—'स्वामिद्रोहः स्त्रीवधो बालहिंसा विश्वस्तानां घातनं लिङ्गभेदः। प्रायेणैतत्पञ्चकं पातकानां कुर्यान्नैव प्राणिनः प्राणदुःखान्॥' हिंसानृतस्तेयब्रह्मपरिग्रहेभ्यो वा न वा महापञ्चपातकीत्युच्यते। सकृदेव एकवारमपि च पुनः अशुभसंकल्पमलिने पापपरिणामदूषिते मनसि खलु निश्चयेन पुनस्तत्प्रसन्नतायां मनोनिर्मलतायामुपाया दुर्लभा भवन्ति। कस्मिन्निव। दुरपवादकलुषिते दुरपवादमलिने सत्पुरुषचेतसीव। चिरेणापि च कालेन कल्याणकर्मणां पुण्यकर्मणां प्रचयः कृतः सन् प्रमादवशेन असावधानतया सकृदपि संजातविधिरुत्पन्नविधानो दुरभिसंधिर्नष्टाभिप्रायः क्षणेन मुहूर्तेन आमूलतो मूलादपि पुण्यकर्मप्रचयो विनश्यति। क इव। पावकनिक्षेपात् प्रासाद इव अग्निमोचनात्

इयमिज्या च मे मोहविह्वला कालरात्रिरिव दुष्परिहारा जानुभञ्जिनीव मे गतिभङ्गाय प्रतिवस्थिता । तदत्राहम् 'इतस्तटमितो व्याघ्रः केनास्तु प्राणिनो गतिः' इतीदृशमन्यायमापतितो यद्यवगणयेयमस्याः प्रतिश्रुतम्, तदेत एव समीपवर्तिनो 'देववुद्धेः फलमनाग्रहः' इत्युपदिशन्तो भविष्यन्त्युपाध्यायाः । सकलजनसमक्षं परमपमानिता चेयं जरती न जाने किं करिष्यति । स्वस्य च मनसि चोक्षापि(?) क्रियोत्प्रेक्षा। सा न भवति पुंसः श्रेयस्करी, या न रञ्जयति परेषां चेतांसि ।

तथा च लौकिकी श्रुतिः—किल बृहस्पतिः सद्वृचोऽपि चुङ्कारनगरे लोचनाञ्जनहरेण कितवेन मिथ्यापवाददूषितः शतक्रतुसभायां प्रवेशं न लेभे । अलब्धाशनाशेन तु पजकनाम्ना वाग्जीवनेन 'अयं भिक्षाभ्रमणव्याजेनार्भकान्भक्षयति' इत्युपहतश्चक्रपाणिः परिव्राड्वाराणस्याम् । मधुपेषु मध्ये पीतपयाश्च मार्कण्डतापसस्तापसाश्रमेषु । ज्ञानं च प्रतिकूलदैवोपनिपातमौषध-

---

...... ...... .......... . .. .............. . ......... ...

...... ...... .......... . .. .............. . ......... ...

...... ...... .......... . .. .............. . ......... ...

...... ...... .......... . .. .............. . ......... ...

...... ...... .......... . .. .............. . ......... ...

...... ...... .......... . .. .............. . ......... ...

...... ...... .......... . .. .............. . ......... ...

...... ...... .......... . .. .............. . ......... ...

...... ...... .......... . .. .............. . ......... ...

...... ...... .......... . .. .............. . ......... ...

...... ...... .......... . .. .............. . ......... ...

..... .. ...... . . ....नाकलोक गत प्रवेश नालभत । तथा चापरा कथा—अलब्धाशनाशेन अलब्धभोजनभोगेन तुशब्द कथान्तरे पजकनाम्ना पजक इति नाम यस्य तेन पजकनाम्ना वाग्जीवनेन वन्दिना अय एप परिव्राट् भिक्षाभ्रमणव्याजेन अर्भकान् भक्षयति इत्यनेन वचनेन उपहतो निन्दित । कोऽसौ । चक्रपाणिः चक्रपाणिनामा परिव्राट् शिखाधारी नाम तपस्वी वाराणस्यां वाराणसीनगरे प्रवेश न लेभे इत्येतत् । मधुपेषु मद्यपायिषु मध्ये पीतपयाश्च मद्यपीनां स्नेहवशात् तन्मध्यवर्तिपीतदुग्धोऽपि मार्कण्डो नाम तापस. अय मद्यपान कृतवानिति लोकैर्निन्दित तापसाश्रमेषु प्रवेश न लेभे । ज्ञान

(प्रकाशम्।) अम्ब, न बालकेलिष्वपि मे कदाचित्प्रतिलोमतां गतासि। न वेद्मि कथमद्यैव ते चन्द्रमतेरप्यस्थाने दुराग्रहमलीमसा मतिः समजनीति। तत्पर्याप्तमत्रालापपरम्परया। भवतु। भवत्येवात्र प्रमाणम्। उत्तिष्ठ। ननु तवैव पूर्यन्तामत्र कामितानि। आहूय त्वमेवादिश कृकवाकुविनिर्माणे शिल्पिनः। साधु समाज्ञापय त्वमेव भगवतीभवनशोभारम्भाय देवभोगिनम्। अनुशाधि त्वमेव यशोमतिकुमारस्य राज्याभिषेकदिवसगणनाय मौहूर्तिकान्। एवमन्यान्यपि विधापय त्वमेव देवद्विजपरिजनपूजापुरःसराणि गृहकार्याणि। अहो वैरिकुलकमलाकरनीहार प्रतीहार, विसृज्यतामयमशेषोऽपि यथायथमनुजीविनिवहः। अहमप्येष चिरप्रवृत्तवार्तासंजातश्रमो मनागप्यसाद्गुमतीतिलकास्सभाम-

---

अत एवाग्निर्यथेष्टाशनोऽभवत्। 'बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति' इति। वररुचिश्च कात्यायन- नृपलीनिमित्त चेटीकारणेन आसवनिपोद्वहन मद्यघटोचालन चकारेत्येव। अस्य कथा—वररुचिः स्खलितब्रह्मचर्यतया सकललोकाधिके नाम्नि वर्तमानो देवतास्यविलासिन्या तस्यै कूटकपटचेष्टितैर्वश्यता नीतः। श्यामकान्तं यथा चोसा(?) तमेवमवोचत्— 'सर्वमुपपन्नमेवैतत्। किं तु यदि मद्यघटं निजशिरसि निधाय उज्जयिनीप्रदक्षिणां करोषि त्वम्।' इति। सोऽपि कामान्धबुद्धिस्तथैव प्रत्यपद्यतेति॥

यशोधरमहाराजः प्रकाशं व्यक्तमुवाच—अम्ब हे मातः, बालकेलिष्वपि मे मम कदाचित् कस्मिंश्चिदवसरेऽपि प्रस्तावे प्रतिलोमता प्रतिकूलत्वं न गतासि। न वेद्मि न जाने कथं केन प्रकारेण अद्यैवास्मिन्नेवाहनि ते तव चन्द्रमतेरपि निर्मलबुद्धेरपि अस्थाने अयोग्याचरणे दुराग्रहमलीमसा दुष्टाग्रहे अतिमलिना मतिर्बुद्धिः समजनि संजातेति। तत्तस्मात् कारणात् पर्याप्तं अलं अत्रास्मिन् कार्ये आलापपरम्परया बहुवचनया। भवतु संजायताम्। भवत्येव त्वमेवात्रास्मिन्कार्ये कुर्कुटमारणतत्पललभक्षणलक्षे प्रमाणं कर्तव्यतया सत्यरूपा। हे मातः, उत्तिष्ठ उत्था भव। ननु निश्चयेन तवैव भवत्या एव पूर्यन्तां अत्र कामतानि। आहूय आकार्य त्वमेव भवती एव आदिश आदेशं देहि कृकवाकुविनिर्माणे कुर्कुटकरणे शिल्पिनो लेपिकारान्। साधु रुचिरं यथा भवत्येव समाज्ञापय आदेशं देहि त्वमेव भगवतीभवनशोभारम्भाय कुलदेवतागृहशोभाकरणाय देवभोगिनं देवब्राह्मणं देवार्चकम्। अनुशाधि आदेशं देहि त्वमेव यशोमतिकुमारस्य राज्याभिषेकदिवसगणनाय राज्याभिषेककरणे लग्नशोधनाय मौहूर्तिकान्। एवममुना प्रकारेण अन्यान्यपि गृहकार्याणि त्वमेव विधापय कारय। कथंभूतानि गृहकार्याणि। देवद्विजपरिजनपूजापुरःसराणि देवपूजाद्विजपूजापरिजनपूजाप्रभृतीनि। अहो हंहो वैरिकुलकमलाकरनीहार शत्रुसमूहकमलवनहिमसमान हे प्रतीहार, विसृज्यतां विमुच्यतामयमेषः अशेषोऽपि सर्वोऽपि यथायथं यथास्थानं अनुजीविनिवहः किंकरसमूहः। अहमपि एष चिरप्रवृत्तवार्तासंजातश्रमः वृद्धवेलासंजाता-

पुरापि किं न रेमे गङ्गा सह महेश्वरेण, राधा नारायणेन, बृहस्पतिपत्नी द्विजराजेन, तारा च वालिना। महासत्त्वेषु हि जगति न किंचिद्दुष्करमस्ति। अन्यत्र विरक्ते चेतसि रागप्रत्यानयनात्। को हि नामाय:पिण्ड इव तप्ता-तप्ते मनसि संधातुमर्हति। किं च परमकुहन एव पुरंध्रीषु बुद्धिमानवा-प्नोति स्वश्रेयसम्। अन्यथा कृत्याराधक इव ध्रुवं पञ्चजनः पञ्चतामञ्चेत्। भवे-द्वावश्यमक्षिगतः। तदेष यावन्न मयि रोषविषं वर्षति तावदहमेवास्य तद्दर्पामि।

---

तथा हि तदेव निष्पत्ति—पुरापि पूर्वकालेऽपि महेश्वरेण सह गङ्गा किं न रेमे। अपि तु रेम एव। अस्य कथा—शन्तनोर्नाम नृपस्य पत्नी पाणिगृहीता वसन्तसमये किल कैलासपर्वते गङ्गानाम्नी सखीभिः सह क्रीडन्ती रतिन्यत्रैव तया सह संचारः नर्म(?) स्वकी-यगीतासंस्मरणाकृष्ट ईश्वर अनुस्मर्ता तामनुभूय भूतपत्नी श्रीमहादेवे गौरीचरितं श्रितवती गिरिसुतया तमन्वेषमाणया तत्रागतया गङ्गया सार्धं ईश्वरमालोक्य वृत्तमिदं प्रावर्तत— 'का त्वं सुन्दरि जाह्नवी किमिह ते भर्ता हरो नन्वयं अम्भस्त्वं किल वेत्सि मन्मथरस जानात्यय ते पतिः। स्वामिन् सत्यमिदं न हि प्रियतमे सत्यं कुतः कामिनामित्येवं हरजाह्नवीगिरिसुतासञ्जल्पितं पातु वः ॥' राधा नारायणेन सह किं न रेमे। अपि तु रेम एव। राधा गोपी नारायणेन सह रतिं चचार इति सुप्रसिद्धमुपा-ख्यानं एतत्। उक्तं च—'अङ्गुल्या कः कपाटं प्रहरति कुटिले माधवः किं वसन्तो नो चक्री किं कुलालो न हि धरणिधरः किं द्विजिह्वः फणीन्द्रः। नाहं घोराहिमर्दी किमसि खगपतिर्नो हरिः किं कपीन्द्र इत्येवं गोपवध्वा चतुरमभिहितः पातु वश्चक्रपाणिः ॥' बृहस्-पतेर्वाचस्पतेः पत्नी भार्या द्विजराजेन चन्द्रेण सह किं न रेमे। अपि तु रेम एव। अस्य कथा— बृहस्पतिपत्नी चन्द्रस्य सह निधुवनं विधाय बुधाभिधानमसुवत् बुधमलभ्य। अत एवासौ निधुर्गुरुतापात् कुष्ठी बभूव। तारा च वालिना सह किं न रेमे। अपि तु रेम एव। तारा सुग्रीवमहिला वालिना सह चिरं चिक्रीडेति महती लौकिकी श्रुतिर्वर्तते। महासत्त्वेषु महा-साहसेषु हि निश्चयेन जगति संसारे न किंचिद्दुष्करमस्ति दुःसाध्यं किमपि नास्ति। अन्यत्र विरक्ते चेतसि रागप्रत्यानयनात्। विरक्ते मनसि रागः प्रत्यानेतुं न शक्यत इत्यर्थः। को हि नामाय:पिण्ड इव तप्तातप्ते मनसि संधातुमर्हति। हि निश्चयेन। कः पुमान्। नामेति संभाव-नायाम्। अयःपिण्डे लोहगोलकाविव तप्तातप्ते न युनक्ति अतप्तेन सह तप्तं च युक्तं तप्ते मनसि चित्ते द्वे संधातुं मेलयितुमर्हति। अपि तु न कश्चिदर्हतीत्यर्थः। तप्तेन सह अतप्तं न युनक्ति। किं चास्ति विशेषः। परं केवलमकुहन एव ईर्ष्यारहित एव बुद्धिमान् पुमान् पुरंध्रीषु स्वश्रेयसं कल्याणमवाप्नोति। ईर्ष्यालुस्तु म्रियत इत्यर्थः। अन्यथा कृत्या देव्या आराधकः पुमान् इव यथा ध्रुवं निश्चयेन पञ्चजनः पुरुषः पञ्चतामञ्चेत् मरणं प्राप्नुयात्। भवेद्वावश्यमक्षिगतः वाथवा अवश्यं निश्चयेन अक्षिगतो द्वेष्यो भवेत्। तत्तस्मात् कारणात्

मूर्ध्ना वहति लोकोऽयं यथा दग्धुमिहेन्धनम्।
अनुशील्य क्षयं नेयस्तथारातिर्महात्मना॥
पुंसामसारसत्त्वानां किं कुर्याद्विक्रमक्रमः।
भस्मीभवन्ति काष्ठानि तेजसानुगतान्यपि॥
ज्ञानवानपि कार्येषु जनः प्रायेण मुह्यति।
हस्तन्यस्तप्रदीपस्य किं न स्खलति शेमुषी॥
प्रायः सरलचित्तानां जायते विपदागमः।
ऋजुर्याति यथा छेदं न वक्रः पादपस्तथा॥
रक्तभावं समस्तानां प्रदर्श्येदिति यः पुमान्।
आदित्यवत्स किं न स्यात्पादाक्रान्तजगत्त्रयः॥

---

मूर्ध्नेत्यादि। अयं लोकः यथा इन्धनं काष्ठभारं इह संसारे दग्धुं भस्मीकर्तुं मूर्ध्ना मस्तकेन वहति उत्क्षिपति, तथा तेनैवेन्धनभारोद्यमप्रकारेण अरातिः शत्रुः अनुशील्य समाधानं नीत्वा क्षयं नेयो विनाशं प्रापणीयः। केन कर्तृभूतेन। महात्मना नीतिशास्त्रचक्षुना। दृष्टान्तः॥

पुंसामित्यादि। पुंसां असारसत्त्वानां सत्त्वरहितानां विक्रमक्रमः पराक्रमपरिपाटिका किं कुर्यात्। अपि तु न किमपि कुर्यादित्यर्थः। अमुमेवार्थं दृष्टान्तेन द्रढयति—काष्ठानि इन्धनानि तेजसा अनुगतान्यपि अग्निना सहितान्यपि भस्मीभवन्ति दह्यन्ते॥

ज्ञानवानित्यादि। ज्ञानवानपि जनः प्रायेण कार्येषु मुह्यति अज्ञानवान् भवति। आक्षेपेण द्रढयति—हस्तन्यस्तप्रदीपस्य करकृतदीपकस्य पुरुषस्य शेमुषी किं न स्खलति। अपि तु स्खलत्येव॥

प्राय इत्यादि। सरलचित्तानां पुरुषाणां प्रायो भूयस्त्वेन विपदागमः मरणं जायते। अमुमेवार्थं दृष्टान्तेन द्रढयति—ऋजुः सरलः पादपो यथा छेदं याति द्विधा भवति तथा वक्रः पादपः छेदं न याति। एतावता कुटिलेनैव भवितव्यम्॥

रक्तभावमित्यादि। यः पुमान् [समस्तेषु रक्तभावमनुरक्ततामनुरागं दर्शयेत्, स किं पादाक्रान्तजगत्त्रयः पादेन चरणेनाक्रान्तं जगत्त्रयं येन तादृक् जगत्त्रयस्वामी न स्यात्। अपि तु स्यादेव। अमुमेवार्थं दृष्टान्तेन द्रढयति—आदित्यवत्। यथा सूर्यः पूर्वमरक्ततां दर्शयति, ततः किरणैर्जगत्त्रयमाक्रामति॥

---

१. 'दर्शयेदिति' इत्येव पाठो भवेत्

बहिर्मृदुर्दधूत्मानः पूर्वं यः स्यात्प्ररोहवत् ।
किमसौ न भिनत्त्येव प्राप्य कालं महीभृतः ॥
शूरोऽपि सत्त्वयुक्तोऽपि नीतिं वेत्ति न यो नरः ।
तत्र संनिहिता नित्यमापदः शरभोपमे ॥

अपि च ।

धूर्तेषु मायाविषु दुर्जनेषु स्वार्थैकनिष्ठेषु विमानितेषु ।
वर्तेत यः साधुतया स लोके प्रतार्यते मुग्धमतिर्न केन ॥

इति च विमृश्य, शठमतिशठन्यायेन किमपि निश्शलाके शिक्षयित्वा कुमारवयस्येनात्मकमञ्जनेनाभिहितं गविष्ठिरममात्यं प्रहितवती । स तथैवागत्य प्रविश्य च निवेदितावसरो मामुन्मूर्च्छितमगमिवातीव परिम्लानम्, मा

---

बहिरित्यादि । यः पुमान् पूर्वं प्रथमं बहिर्भागे मृदुः कोमलः स्यात् भवति अपु त्मानश्च सन् दुर्भिनरोऽत्यन्तभिन्न भवति । किंवत् । प्ररोहवत् चिप्पटाङ्कुरवत् । असौ पुमान् कालं प्राप्य महीभृतः नृपान् किं न भिनत्ति । अपि तु भिनत्त्येव । यथा प्ररोहे अङ्कुरो मृदुर्मृदुर्धूत्मानः कालेन पर्वतमपि भिनत्ति । आक्षेपः ॥

शूर इत्यादि । शूरोऽपि सत्त्वयुक्तोऽपि यो नरः नीतिं न्यायशास्त्रं न वेत्ति न जानाति, तत्र नरे नित्यं आपदः कष्टानि संनिहिताः समीपवर्तिन्यो भवन्ति । कथंभूते तत्र नरे । शरभोपमे अष्टापदसदृशे । यथाष्टापदो मेघगर्जनेनैव म्रियते । उपमालंकारः ॥

अपि च तथा च । धूर्तेष्वित्यादि । धूर्तेषु वञ्चकेषु, मायाविषु कपटेषु, दुर्जनेषु खलेषु, स्वार्थैकनिष्ठेषु आत्मकार्यतत्परेषु, विमानितेषु मानभङ्गं प्रापितेषु, पुरुषेषु च यः पुमान् साधुतया ऋजुतया वर्तेत प्रवर्तेत स मुग्धमतिर्विवेकहीनः केन पुरुषेण न प्रतार्यते । अपि तु सर्वैरपि वञ्च्यत इत्यर्थः । आक्षेपालंकारः ॥

पुनश्च किं कृत्वा अमात्यं सचिवं प्रहितवती । शठमतिशठन्यायेन धूर्तं प्रति धूर्तत्वमाचरणीयमिति न्यायप्रकारेण किमपि अनिर्वचनीय निःशलाके एकान्ते गविष्ठिरं सत्यासत्यं शिक्षयित्वा शिक्षां दत्त्वा । कथंभूतं गविष्ठिरम् । कुमारवयस्येन कुमारबालमित्रेण आत्मकमञ्जनेन आत्मकमञ्जननामधेयेन अभिहितं कथितम् । स गविष्ठिरो मां प्रति एवमधुना प्रकारेण अभिहितवान् । तथैव निःशल्यप्रविष्टचतुरप्रकारेण आगमनं जल्पनं कृत्वा । न केवलमागत्य । किंतु प्रविश्य च विजयमन्दिरं अभ्यन्तरे आवासं प्रवेशं कृत्वा । कथंभूतः सन् प्रविश्य । निवेदितावसरः द्वारपालेन सूचितावसरः । पुनश्च किं कृत्वा अभिहितवान् । मां कथंभूतं दृष्ट्वा । कथंभूतं माम् । अतीव परिम्लानं अतिशयेन मानसदुःखसमन्वितम् । कमिव । उन्मूर्च्छितं अगमिव वृक्षमिव उत्पाटितं अग्रे

मलिनोद्गारासि, वसन्तस्य वनलक्ष्मीरिवात एव मन्मथकथासनाथासि, मलयाचलस्य चन्दनलतेवात एव कटुस्वभावासि, गजस्य मदलेखेवात एव कामचारप्रवर्तनासि, हिमगिरेर्गङ्गेवात एव नीचानुगतासि, रत्नस्य रागवर्तिरिवात एव परभागघटितासि। एवमन्यदपि ममान्यथार्थोपकल्पनविषयमभिधाय तद्देवस्य सर्वदा राज्यसुखं दायभागिनीव समांशतयानुभूयेदानीमेकाक्येवं परमार्थेनोपस्थितप्रत्यवायवचनमनीषया वा देवः प्रव्रजति। अहं तु पुत्रस्य श्रियमनुभवन्ती गृह एव प्रतिष्ठामि। इत्यतीवासंगतमुभयकुलानुचितं शिष्टजनविगर्हितं च। न चैवमावयोरनुष्ठानाविष्ठितयोः कोऽप्यागमविरोधो जनापवादानुबन्धो वा। तथा चोक्तम्—

---

भवति। पुनश्च केव सहचरी भवामि। प्रदीपस्य शिखेव ज्वालेव। यशोवतीश्चिन्तयति—अत एव मलिनोद्गारासि धूमोद्गमकारिणी वर्तसे। पुनश्च केव सहचरी भवामि। वसन्तस्य वनलक्ष्मीरिव मधुमासोद्भवस्य वनलक्ष्मीर्यथा सहचारिणी भवति। यशोवतीश्चिन्तयति—अत एव मन्मथकथासनाथासि कामकथासंयुतासि। पुनश्च केव सहचरी भवामि। मलयाचलस्य चन्दनलतेव मलयपर्वतस्य चन्दनवल्लीव। यशोवतीश्चिन्तयति—अत एव कटुस्वभावासि कटुपरिणामिनी वर्तसे। पुनश्च केव सहचरी भवामि। गजस्य मदलेखेव दानवारिव। यशोवतीश्चिन्तयति—अत एव कारणात् कामचारप्रवर्तनासि यथेष्टपर्यटनासि। पुनश्च केव सहचरी भवामि। हिमगिरेर्गङ्गेव हिमाचलस्य गङ्गेव। यशोवतीश्चिन्तयति—अत एव नीचानुगतासि नीचानुगामिनी वर्तसे। पुनश्च केव सहचरी भवामि। रत्नस्य रागवर्तिरिव मणेस्तेजोवर्तिरिव। यशोवतीश्चिन्तयति—अत एव कारणात् परभागघटितासि परस्य रिपोः भागाय निर्मिता वर्तसे। यथा रत्नवर्तिः परभागेन शोभया घटिता भवति। एवममुना प्रकारेण अन्यदपि ममान्येन अन्यथार्थोपकल्पनविषयं वक्रोक्तिविषयं अभिधाय उक्त्वा तत्तस्मात् कारणात् देवस्य मम प्राणवल्लभस्य सर्वदा सर्वकालं राज्यसुखं नार्पितं सौख्यं दायभागिनीव भागविभागिनीव समांशतया समभागतया अनुभूय भुक्त्वा इदानीं एकाकी एक एव देव एव एवममुना प्रकारेण देवः प्रव्रजति दीक्षां गृह्णाति। देवः किमर्थं प्रव्रजति। परमार्थेन मोक्षसुखाभिलाषकतया उपस्थितप्रत्यवायवचनमनीषया वा आगतया अनिष्टकरणबुद्ध्या वा। अहं तु पुत्रस्य यशोमतेः श्रियं लक्ष्मीमनुभवन्ती भुञ्जाना गृह एव मन्दिर एव प्रतिष्ठामि। इति अतीव असंगतं अयुक्तं वर्तते। न केवलमसंगतं उभयकुलानुचितं श्वशुरपित्रोः कुलयोरयुक्तम्। शिष्टजनविगर्हितं निन्दितं च वर्तते। न च नैव एवममुना प्रकारेण आवयोस्तव मम च अनुष्ठानाविष्ठितयोः चारित्रानुरूपयोः कोऽपि कश्चिदागमविरोधो न वर्तते। जनापवादानुबन्धो लोकापवादसंबन्धो वा न वर्तते। तथा चोक्तम्—सहचरी भवामि इत्युपरिवचनमस्ति।

